तेषां वातादिनयरोधजातानां रोगाणां फलवर्त्यादि सामान्यमौषधम् । वर्तिः तीक्ष्णद्रव्यकृता गुदप्रणेया । अवगाहोवातहरद्रव्यसाधिते द्रवे द्रोणीस्थिते मनुष्यस्यावस्थानम् । बस्तिकर्म मलप्रवृत्तये निरूहयोजना वक्ष्यमाणा । विड्रोधेषु विड्भेदनपाने विशेषेण । मूत्ररोधजेषु तु विशेषेण भोजनपूर्वं घृतपानं जीर्णान्तिकश्च घृत प्रशस्यते । जीर्णान्तिकं यत् स्वल्पेऽन्ने जीर्णे युज्यते उत्तमया मात्रया अहोरात्रजरणलक्षणया इति प्राग्भक्तस्नेहयोजना जीर्णान्तिकस्नेहयोजना च । उभयमवपीडकमुच्यते । तेन मदेशेऽप्यवपीडकशब्देन इद योजनाद्वय ज्ञेयम् ॥

—धारणात् पुनः ॥

उद्गारस्यारुचिः कंपोविबन्धोहृदयोरसोः ।

आध्मानकासहिध्माश्च हिध्मावत्तत्रभेषजम् ॥

पुनःशब्दः पूर्वमन्यनिर्दिष्टवातप्रकारोत्तशिष्टोद्गाराख्यवातपरामर्शार्थः । उद्गारस्य पुनर्धारणादरुच्यादयः । उरो-वक्षः, हृदयं तस्याधस्तयोर्निबन्धः अन्तःसंगइव । वायुना कुपितेन नाभेरधः सशूलमापूरआध्मानः । एतेषु रोगेषु चिकित्सितस्थाने वक्ष्यमाणा हिध्माचिकित्सा कार्या ॥

शिरोर्तीन्द्रियदौर्बल्यमन्यास्तंभार्दितं क्षुतेः ।

[illegible] ॥

[illegible] लयेत्

योज्यं वातघ्नमन्नं च घृतश्चौत्तरभक्तिकम् ॥

क्षुतेः क्षवथोः रोधात् शिरोर्त्यादिरोगोत्पत्तिः । इन्द्रियाणां दर्शनादीनामशक्तत्वं स्वविषयग्रहणेदौर्बल्यम् । अत्र तीक्ष्णधूमादिभिः सक्तामप्रवर्तमानां क्षुतिं प्रवर्तयेत् तीक्ष्णो धूमोवक्ष्यमाणलक्षणः । तीक्ष्णाघ्राणं नासया मरिचादिग्रहणम् । औत्तरभक्तिकं भोजनस्य पश्चात् तत्कालिकमेव घृतं योज्यम् ॥

शोषांगसादबाधिर्यसम्मोहभ्रमहृद्गदाः ।

तृष्णाया निग्रहात्तत्र शीतस्सर्वो विधिर्हितः ॥

तृष्णायानिग्रहाद्रोधात् शोषाद्युद्भवः । बाधिर्यमश्रुतिः । मोहएव सम्मोहः । तत्र तृड्रोधे सर्वोविधिः स्नानावगाहनादिकः शीतः कार्यः ॥

अंगभंगारुचिग्लानिकार्श्यशूलभ्रमाः क्षुधः ।

तत्र योज्यंलघु स्निग्धमुष्णमल्पञ्च भोजनम् ॥

क्षुधावेगरोधादंगभंगाद्युत्पत्तिः । तत्र च लघु शाल्यादि स्निग्धमुष्णमल्पञ्च भोजनं विधेयम् ॥

निद्राया मोहमूर्धाक्षिगौरवालस्यजृंभिकाः ।

अंगमर्दश्च तत्रेष्टः स्वप्नः संवाहनानि च ॥

निद्रावेगधारणान्मोहशिरोगौरवादयः । तत्र स्वप्न संवाहनानि च योज्यानि । संवाहनं स्वल्पमर्दनम् ॥

कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः ।

शोषोहिध्मा च कार्योऽत्र कासहा सुतरां विधिः ॥

कासस्य वेगरोधात् कासवृद्ध्याद्युत्पत्तिः तत्र कासचिकित्सितनिर्दिष्टोविधिः कार्यः ॥

गुल्महृद्रोगसंमोहाः श्रमश्वासाद्विधारितात् ॥

हितं विश्रमणं तत्र वातघ्नश्च क्रियाक्रमः ।

श्रमव्यायामादिजाद्धरोन सद्यउत्पन्नः श्वासः श्रमश्वासः, तद्वेगरोधात् गुल्माद्युत्पत्तिः । तत्र विश्रमणं, वातघ्नी च क्रिया हिता ॥

जृंभायाः क्षववद्रोगाः सर्वश्चानिलजिद्विधिः ॥

जृंभावेगरोधात् क्षुतिवद्रोगोत्पत्तिः । तत्र वातघ्नी क्रिया हिता । जृंभा समुखविकासो गात्रविनामः ॥

पीनसाक्षिशिरोहृद्रुङ्मन्यास्तंभारुचिभ्रमाः ।

सगुल्मावाष्पतस्तत्र स्वप्नोमद्यं प्रियाः कथाः ॥

बाष्पस्याश्रुणोवेगरोधात् पीनसाद्युत्पत्तिः । पीनसोनासास्रावः । अक्ष्यादीनां रुजया सम्बन्धः । तत्र स्वप्नादिका चिकित्सा ॥

विसर्पकोठकुष्ठाक्षिकण्डूपाण्ड्वामयज्वराः ।

सकासश्वासहृल्लासव्यंगश्वयथवोवमेः ॥

गण्डूषधूमानाहारं रूक्षं भुक्त्वा तदुद्वमः ।

व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनम्

सक्षारलवणं तैलमभ्यंगार्थे च शस्यते ॥

वमेः छर्दिषः वेगधारणाद्विसर्पाद्युत्पत्तिः । कोठः स्थानानि मण्डलानि । तत्र गण्डूषादिका चिकित्सा रूक्षं चान्नं भुक्त्वा उद्वमेत् । स्निग्धस्य कफोत्क्लेशकरत्वात् ।

एतावता हि प्राणो वायुः स्वमार्गं गृह्णाति । घ्राणश्रवणाभ्यां पुनः तैलमभ्यंगे च योजयेत् ॥

शुक्रात्तत्स्रवणं गुह्यवेदनाश्वयथुज्वराः ।
हृद्व्यथा मूत्रसंगांगभंगवृध्द्यश्मषण्डताः ॥
ताम्रचूडसुराशालिवस्त्यभ्यंगावगाहनम् ।
बस्तिशुद्धिकरैः सिद्धं भजेत् क्षीरं प्रियाः स्त्रियः
तत्र सेवेत—

शुक्रवेगरोधात् शुक्रस्रावाद्युत्पत्तिः । षण्डता नपुंसकता । तत्र च ताम्रचूडादिका चिकित्सा । ताम्रचूडः कुक्कुटः । बस्तिशुद्धिकरैः त्रपुसप्रभृतिभिः सिद्धं क्षीरं भजेत् । प्रियाश्च युवतीः ॥

—सर्वं च वर्जयेद्वेगधारिणम् ।
विड्वामिनं परिक्लिष्टं क्षीणं तृट्छूलपीडितम्

न च एवंविधे वेगरोधिनि चिकित्सा कार्या ॥

रोगाः सर्वेऽपि जायन्ते वेगोदीरणधारणैः ।

वेगधारणे दोषानुक्त्वा उदीरणे रोगानाह रोगा इत्यादि । यथैव धारणग्रहणं न कर्तव्यं उदीरणेन सर्वरोगोत्पत्तेः उदीरणेनापि धारणे निर्दिष्टानामेव रोगाणामुत्पत्तिः प्रसज्यते तन्निवृत्त्यर्थं धारणग्रहणम् ॥

निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति ॥
ततश्चानेकधा प्रायः पवनो यत् प्रकुप्यति ।
अन्नपानौषधं तस्य युञ्जीतातोऽनुलोमनम् ॥

यदि धारणोदीरणाभ्यां सर्वे रोगाः प्रजायन्ते अतो वाताद्युदीरणेन गुल्मादिवचनमनर्थकमित्याह निर्दिष्टमित्यादि । तत्र तयोर्वेगधारणोदीरणयोर्मध्ये वेगधारणाच्चिरकालभाविनः प्रायः अन्ये वा रोगा भवन्ति । उदीरणाच्च तथा । तेन भूयिष्ठं ये सम्भवन्ति तान् प्रति चिकित्सितं निर्दिष्टमित्यर्थः । अस्माद्वेगधारणादितरेभ्यः पवन एव कुप्यति यत्तस्मादनुलोमनमस्य हितम् ॥

क्रमाद्पामपि मणौ पंकोऽवश्यं भवत्यतः ।
उत्तिष्ठेत यथाकालं मलानां शोधनं प्रति ॥

एवं स्वास्थ्यसंपादनरोगोत्पानिरोधप्रसंगेनेदमप्युच्यते क्रमादित्यादि । यथा निर्मलेऽपि मणावम्भसि स्थितानां स्वभावनिर्मलानामप्यपां क्रमात् कालपरिणामात् पंकोऽवश्यं भवति तथा मनुष्याणां अन्नपानादि देहे दोषसञ्चयः । अतोऽत्र यथाकालं उक्तशोधनकालानतिक्रमेण मलानां दोषाणां शोधनं प्रति सेवार्थमुत्तिष्ठेत चेष्टेत ॥

चयकाष्ठामुपारूढा कुर्वते ते ह्युपेक्षिताः ।
प्रायशः सुचिरेणापि भेषजद्वेषिणो गदान् ॥
अतिस्थौल्याग्निसदनमेहकुष्ठहलीमकः ।
स्रोतोरोधाक्षविभ्रंशश्वासश्वयथुपाण्डुताः ॥
आमोरुस्तंभजठरकृच्छ्रशूलालसकदण्डकान् ।
छर्दिगण्डकृमिग्रन्थितन्द्रादुःस्वप्नदर्शनम् ॥
कण्ठामयान् मूर्द्धरुजं प्रणाशं बुद्धिनिद्रयोः ।
तेजोवर्णबलानां च तृप्यतो बृंहणैरपि ॥
उचितैरपि चाऽऽहारैर्यस्मादस्य वहन्ति न ।
दोषोपलिप्तवदना रसं रसवहाः सिराः ॥
वमनादीनतो युञ्ज्यात् स्वस्थस्यैव यथाविधि ।
दोषाः कदाचित् कुप्यन्ति जिता लंघनपाचनैः ;
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ।
यथाक्रमं यथायोगमत ऊर्ध्वं प्रयोजयेत् ॥
रसायनानि सिद्धानि वृष्ययोगांश्च कालवित्

हि यस्मात् भेषजं वमनादि ये द्विषन्ति न सेवन्ते तेषां दोषाश्चयावस्थामुपारूढा उपेक्षिताश्च सुचिरेणापि रोगान् कुर्वते यथासंभवमतिस्थौल्यादीन् । हलीमकशब्दः पुंल्लिंगः सन्निपातज्वरपर्यायः । "सन्निपातमभिन्यास त प्रयाद्य हलीमसम्" , अक्षविभ्रंश इन्द्रियविनाशः । अलसकदण्डकौ वक्ष्यमाणलक्षणौ । दुःस्वप्नोऽपि सुप्ताभिमानिता । ग्रीष्मकं स्तैमित्यम् । अम्लपित्तस्यापरनामेत्यन्ये पठन्ति । यथा "पच्यमानं विदाह्यन्नं रक्तादीन् कोपयेद्यदा । पित्तं च कोपयेदाशु कफस्थानानिलेरितम् । तदा भवति हृच्छूलमुखवैरस्यमादनम् । लवणं तिक्तमम्लं च सततं छर्दयत्यपि ।

---

*पायुमेहनमुष्केषु शूलं शोफो हृदि व्यथा ।
तेषु तेषु विकारेषु यथास्वं च चिकित्सितम् ॥

इति मूलग्रन्थेऽधिकः पाठः । व्याख्या न दृश्यते ।

दाहोऽग्निनिद्रा विट्संगोऽवैवर्ण्यं कार्यमेव च । अरोचकोत्क्लेशलुकिता प्रसेकः श्लेष्मणस्तथा । स्युर्यत्रैतानि लिंगानि निर्दिशेत् तत् प्रमीलकम् । पर्यायादम्लपित्तं च तथा पित्तविषूचिके”ति । उचितैः सात्म्यैर्बृंहणैरपि चाऽऽहारैः तृप्तिं यात स्तेजसोऽग्नेस्य बलस्य च नाशः । यस्मात् दोषोपलिप्तमुखाररसंवहाः सिरा रसं न वहन्ति । तदर्थं वमनादीनुपक्रमान् योजयेत् स्वरूपस्यैव । न तु रोगविशेषान्तरत्वेन । अन्यत्सुबोधम् ॥

भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात् ॥
शालिषष्टिकगोधूममांसक्षीरघृतादिभिः ।
हृद्यदीपनभैषज्यसंयोगाद्रुचिपक्तिदैः ॥
साभ्यंगोद्वर्तनस्नाननिरूहस्नेहबस्तिभिः ।
तथा स लभते शर्म सर्वपावकपाटवम् ॥
धीवर्णेन्द्रियवैमल्यं वृषतां दैर्घ्यमायुषः ।

बहुशो भेषजप्रयोगात् क्षपिते शरीरे आहारैरेव बृंहणं क्रमात् स्वल्पं स्वल्पं पुष्टिकरं सर्वं पथ्यम् । किंभूतैराहारैः शाल्यादिभिर्हृद्येन दीपनेन चौषधेन संयोगाद्रुचिप्रदैरग्निबलप्रदैश्च । सर्वपाचकानां जाठरस्य धात्वग्नीनां च पटुत्वम् ॥

ये भूतविषवाय्वग्निक्षतभंगादिसंभवाः ॥
कामक्रोधभयाद्याश्च ते स्युरागन्तवो गदाः ।

निजरोगोत्पत्तिकारणपरिहारप्रसंगेनाऽऽगन्तवो रोगास्तत्परिहारार्थोच्यन्ते । ये भूतेत्यादि । भूतादिसंभवा रोगा रागादयश्चाऽऽगन्तवो व्याधयः । आगन्तुलक्षणं वक्ष्यमाणलक्षणम् ॥

त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ॥
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ।
अथर्वविहिता शान्तिः प्रतिकूलग्रहार्चनम् ॥
भूताद्यस्पर्शनोपायो निर्दिष्टश्च पृथक् पृथक् ।
अनुत्पत्त्यै समासेन विधिरेषः प्रदर्शितः ॥
निजागन्तुविकाराणामुत्पन्नानां च शान्तये ।

तेषामागन्तूनामनुत्पत्तौ विधिः प्रज्ञापराधत्यागादिः । प्रज्ञापराधो दिनचर्याद्युक्तविध्यतिक्रमः । देशादिविज्ञानेन विषयस्य मनः स्वस्थतां याति । एवमाभिजनोऽहं । तत्र चेदनुचितमिदमनुचितम् । एवमहमर्थमानेनमहं चरः । इदयस्मिन् देशे काले चोचितमिदं नेति बहुविधं परिकल्पनं देशकालात्मविज्ञानम् । भूतग्रहादीनामस्पर्शने य उपायो भूतविद्यायां निर्दिष्टः । तथाच तेषु भूतेषु केचित् स्पृशन्तोऽधितिष्ठन्ति केचिज्जिघांसन्त इत्येवमायत्तमिति । द्विविधो रोगो त्पत्स्यमान उत्पन्नश्च रोगाणां नाशाय विधिः प्रदर्शितः ।

शीतोद्भवं दोषचयं वसन्ते
विशोधयन् ग्रीष्मजमभ्रकाले ।
घनात्यये वार्षिकमाशु सम्यक्
प्राप्नोति रोगानृतुजान् न जातु ॥

दोषाणां हि शोधनमुक्तम् तस्य तु काल उच्यते शीतोद्भवमित्यादि । इति साधारणेषु कालेषु दोषान्निर्हरन् ऋतुजान् रोगान् न कदाचित् प्राप्नोति । अतिशीतादिकालेषु अयोगादिशङ्का ॥

नित्यं हिताहारविहारसेवी
समीक्ष्यकारी विषयेष्वसक्तः ।
दाता समः सत्यपरः क्षमावा-
नाप्तोपसेवी च भवत्यरोगः ॥

नित्यं हिताहारेत्यादि सुबोधम् ॥

अर्थेष्वलभ्येष्वकृतप्रयत्नं
कृतादरं नित्यमुपायवत्सु ।
जितेन्द्रियं नानुपतन्ति रोगा-
स्तत्कालयुक्तं यदि नास्ति दैवम् ॥

तथा यः पुरुषार्थेष्वलभ्येषु अपरिच्छिन्नलाभेषु वस्तुषु अनारब्धयत्नः उपायवत्स्वमानेषु कृतप्रयत्नः जितेन्द्रियश्च त रोगा नानुपतन्ति तत्कालयुक्तादिना दैवात् । दैवे पूर्वकृते कर्मणि दुष्टे तत्कालं फलमत्यवश्यमेव रोगोत्पत्तिः ॥

कालोऽनुकूलो विषया मनोज्ञा
धर्म्याः क्रियाः कर्म सुखानुबन्धि ।
सत्त्वं विधेयं विशदा च बुद्धि-
र्भवन्ति धीरस्य सदा सुखाय ॥

कालोऽनुकूलः हीनातिमिथ्यायोगवर्जितः अर्थलाभादिफलप्रदश्च । विषया शब्दादयः मनोज्ञाः प्रियाः । कि-

मुदकं भवति । पार्थिवगुणाधिके लवणाम्लम् । तेजोभागाधिके तिक्तकटुकम् । वायुभागाधिके कषायम् । आकाशगुणाधिके चाव्यक्तरसत्वादान्तरिक्षसमगुणम् । भूतविषय च विशिष्टमनेनैव मधुररसादिना ज्ञायते । गुणशब्दश्च भागपर्यायः । सङ्ख्यायागुणस्यममानेत्यादिना विभागो गुणइति च । यथा । अव्यक्तरसत्वम् । मूर्तमहाभूतस्वल्पत्वादिदमपि दिव्यसदृशं शुचौ विस्तीर्णे कृष्णे श्वेतमृदि च स्थितं अर्केण वायुना चाऽऽहतम् ॥

**कौपसारसताडाकचौण्डप्रास्रवणौद्भिदम् ॥**
**वापीनदीतोयमिति तत् पुनः स्मृतमष्टधा ।**

तत् भूमिष्ठ अष्टधा अष्टभिः प्रकारैः स्मृतं कौपत्वादिभिः । कूपे भवं कौपम् । सरसि भवं सारसम् । तथा ताडाकम् । चौण्डं पर्वतादौ पाषाणनिम्नस्थितम् । ताटाकक्षान्तरिक्षात् पतित्वा भूमौ स्थितम् । प्रास्रवणं पर्वतात् स्रुतम् । औद्भिदं भूमावुद्भिद्य तत्रैव तिष्ठति । वापी कूपवत् सर्वतः कृतसोपानपङ्क्तिः । नदी प्रसिद्धा एतेषां क्रमेण गुणनिदर्शनम् ॥

**सक्षारं पित्तकृत् कौपं दीपनाग्न्यातिवातलम् ॥**
**सारसं स्वादु लघु च ताटाकं गुरु वातलम् ।**
**चौण्डं तु पित्तलं दोषहरं प्रास्रवणोदकम् ॥**
**औद्भिदं स्वादु पित्तघ्नं स्वादु वापीजलं लघु ।**
**नादेयं वातलं रूक्षं कटुकं च तदादिशेत् ॥**
**धन्वानूपमहीध्राणां सामीप्यात् गुरुलाघवम् ।**

कौपं क्षारगुणयुक्तं पित्तलम् । अग्निदीपनं अल्पवातलं च सारसम् । मधुरं लघु च । ताटाकं गुरु वातकरं च । चौण्डं पित्तलम् । प्रास्रवणं त्रिदोषहरम् । औद्भिदं मधुरं पित्तघ्नम् । वापीजलं मधुरं लघु च । सामान्येन वातलं रूक्षं कटुकञ्च नादेयम् । कौपादीनाञ्च सतां धन्वादिसामीप्यात् गुरुत्वं लघुत्वञ्च विज्ञेयम् । तेनैतदुक्तं भवति आनूपे यथोक्तलक्षणे स्थिताः कूपादयोगुरवः । धन्वनि जाङ्गले देशे स्थिता आनूपेभ्योलघवोबहूदकसंबन्धाभावात् । तेभ्यो जाङ्गलेभ्यः पर्वतस्थानां कूपादीनामतिलघुत्वं उदकानामत्यन्ताभावादित्यत चोत्सर्गापवादोपबृंहकवचनकल्पना च स्वबुध्या योज्या ॥

**पश्चिमोदधिगाः शीघ्रवहायाश्चामलोदकाः ॥**
**पथ्याः समासात्तान्योविपरीतास्ततोऽन्यथा ।**
**उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ॥**
**हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिताः**
**क्रिमिश्लीपदहृत्कण्ठशिरोरोगान् प्रकुर्वते ॥**

नद्य उच्यन्ते । समासात्सङ्क्षेपतः इदमुच्यते । पश्चिमसमुद्रगाः शीघ्रवाहिन्योनिर्मलपानीयाश्च नद्यः पथ्याः । एतद्विपरीतलक्षणाविपरीताअपथ्याः । हिमवद्भूताः मलयोद्भूताश्च पाषाणक्षुण्णाः पथ्याः । स्थितास्ताएवापथ्याः क्रिमिश्लीपदादिकराश्च ॥

**प्राच्यावन्त्यपरान्तोत्थादुर्नामानि महेन्द्रजाः ।**
**उदरश्लीपदातंकान् सह्यविन्ध्यभवाः पुनः ॥**
**कुष्ठपाण्डुशिरोरोगान् दोषघ्न्यः पारियात्रजाः**
**बलपौरुषकारिण्यस्सागराम्भस्त्रिदोषकृत् ॥**

प्राच्यादिजातादुर्नामानि कुर्वते । प्राच्यागौडाः । अवन्तयोमाळवाः । अपरान्ताः कोकणाः । महेन्द्रजाउदरादिकं कुर्वते । सह्यविन्ध्याच्च जाताः कुष्ठादिकं कुर्वते । पारियात्रजास्त्रिदोषहराः बल्याः पौरुषकारिण्यः । पौरुषं पुंस्त्वम् । समुद्रजलं त्रिदोषकरम् ॥

**कीटाहिमूत्रविट्कोथतृणजालोत्कराविलम् ।**
**पंकपंकजशैवालहठपर्णादिसंस्तृतम् ॥**
**सूर्येन्दुपवनादृष्टं जुष्टं च क्षुद्रजन्तुभिः ।**
**अभिवृष्टं विवर्णं च कलुषं स्थूलफेनिलम् ॥**
**विरसं गन्धवत्तप्तं दन्तग्राह्यतिशैत्यतः ।**
**अनार्तवञ्च यद्दिव्यमार्तवं प्रथमञ्च यत् ॥**
**लूतादितन्तुविण्मूत्रविषसंश्लेषदूषितम् ।**
**तत्कुर्यात्स्नानपानाभ्यां तृष्णाध्मानोदरज्वरान्**
**कासाग्निसादाभिष्यन्दकण्डूगण्डादिकानतः ।**
**तद्वर्जयेदभावे वा तोयस्यान्यस्य शस्यते ॥**
**घनवस्त्रपरिस्रावैः क्षुद्रजन्त्वभिरक्षणम् ।**
**व्यापन्नस्यास्य तपनमग्न्यर्कायसपिण्डकैः ॥**
**पर्णीमूलविसग्रन्थिमुक्ताकतकशैवलैः ।**
**वस्त्रगोमेदकाभ्यां वा कारयेत्तत्प्रसादनम् ॥**
**पाटलाकरवीरादिकुसुमैर्गन्धनाशनम् ।**

कीटमूत्रादियुक्तं जलं स्नानपानादिना तृष्णादीन् कुर्यात् । कीटादीनां क्रिम्यादीनां मूत्रेण विशा संश्लेषेण च ।

स तथा ।

अनवस्थितदोषाग्निर्व्याधिक्षीणबलस्य च ।
नाल्पमप्याममुदकं हितं तद्धि त्रिदोषकृत् ॥
तैजसः प्रतिपक्षत्वान्मन्दाग्निर्वर्जयेज्जलम् ।
सर्वमेव तथा स्यन्दप्लीहविद्रधिगुल्मिनः ॥
पाण्डूदरातिसारार्शोग्रहणीशोषशोफिनः ।
काममल्पमशक्तौ तु पेयमौषधसंस्कृतम् ॥
ऋते शरन्निदाघाभ्यां पिबेत्स्वस्थोऽपि चाल्पशः

अनवस्थितदोषस्यानवस्थिताग्नेश्च स्वल्पमप्यामं जलं न पथ्यम् । तद्ध्याममेवं त्रिदोषकृत् । अनवस्थिताः स्वरूपाच्चलिता अनेकरूपाश्च दोषा यस्य स तथाविधः । एवमनवस्थितोऽग्निरपि । तथा व्याधिभिः क्षीणं बलं यस्य तस्याऽप्यामुदकं त्रिदोषकरम् । तथा मन्दाग्निः सर्वमेव जलं कौपादिकमामं स्वल्पं पक्वं बहु च वर्जयेत् । तथाऽभिष्यन्दादिमद्भिश्च सर्वमेव जलं वर्जनीयम् । अभिष्यन्दो नाम चक्षूरोगो वक्ष्यमाणः । अशक्तौ तु विना जलं प्राणसन्धारणासामर्थ्ये कदाचित् पेयम् । तच्च स्वल्पम् । किंभूतमल्पं पेयं आह । रोगयोग्यैरौषधैः संस्कृतम् । तथा शरदं निदाघं च वर्जयित्वा अन्यस्मिन्नृतौ स्वस्थेनापि स्वल्पं पेयं एतयोस्तु यथेच्छमेव ॥

भक्तस्यादौ जलं पीतमग्निसादं कृशाङ्गताम् ।
अन्ते करोति स्थूलत्वमूर्ध्वं चाऽऽमाशयात् कफम्
मध्ये मध्याङ्गतां साम्यं धातूनां जरणं सुखम् ।

तच्च जलं भोजनकाले अन्नात् पूर्वं पीतं अग्निमान्द्यं कार्श्यं च करोति । सर्वं च भुक्त्वा अन्ते पीतं शरीरस्य स्थौल्यं आमाशयादुपरि च श्लेष्मवृद्धिं करोति । मध्ये त्वन्नस्य पीतं समाङ्गतां समधातुतां च करोति । एवं चान्नं जरयति ॥

शीतं मदात्ययग्लानिमूर्छाछर्दिश्रमभ्रमान् ॥
तृष्णोष्णदाहपित्तास्रविषाणि च निहन्ति तत्

शीतं च तदुदकं मदात्ययादीन् वक्ष्यमाणलक्षणान् निहन्ति नाशयति उष्णेन कालेन उष्णेनाऽऽहारादिना च दाहः उष्णदाहः ॥

क्षीणपादत्रिभागार्धं देशर्तुगुरुलाघवात् ।
क्वथितं फेनरहितमवेगममलं हितम् ॥
हिध्माध्मानानिलश्लेष्मतृट्कासश्वासपीनसे ।
पार्श्वशूलाममेदस्सु सद्यःशुद्धौ नवज्वरे ॥
दीपनं पाचनं कण्ठ्यं लघुबस्तिविशोधनम् ॥

तच्चाम्बु हिध्मादिषु क्वथितं पेयम् । का क्वथनमात्रेत्युच्यते । देशर्तुगुरुलाघवं विकल्प्य क्षीणचतुर्भागं वा क्षीणत्रिभागं वा क्षीणार्धं वेति त्रिधा । तेनैतदुक्तं भवति । यत् कश्चिद्देशकालौ वा स्वल्पेन गुरुत्वेन युक्तमुदकं तत् क्वथनेन क्षीणचतुर्भागम् । अधिकगुरौ क्षीणत्रिभागम् । अत्यन्तगुरौ अर्धक्षीणमिति । एतद्विपरीते च लाघवेऽप्येवं व्याख्येयं तच्च जलमामिमर्गोऽपि आकर्णपाकित्वादाम भवति । फेनरहितन्तु क्वथितं भवति । वेगरहितञ्च पक्वलक्षणं निर्मलञ्च । तच्च पक्वं हिध्मादीनां हितम् । उष्णमुदकं दीपनं आमदोषपाचनम् । स्वयं लघु बस्तिशोधनं च ॥

पाषाणरूप्यमृद्धेमजतुतापार्कतापितम् ॥
पानीयमुष्णं शीतं वा त्रिदोषघ्नं तृडार्तिजित् ।
लघ्वरूक्षं क्षतघ्नञ्च तोयं क्वथितशीतलम् ॥
संसर्गे पित्तकफयोः सन्निपाते च शस्यते ।
तोयं वन्हिगुणभ्रष्टं पाकेऽम्लं सर्वदोषकृत् ॥
भवेत् पर्युषितं तच्च—

तच्चैव पाषाणादिभिस्तापितं तत्कालोष्णं शीतमेव वा पीतं त्रिदोषघ्नं तृष्णाघ्नं च । क्वथितशीतलं लघुत्वादियुक्तम् । संसर्गे पित्तश्लेष्मणोः सन्निपाते च पथ्यम् । उत्तरस्य शीतस्य वातश्लेष्मकोपहेतुत्वेनोक्तेः । वाते वातश्लेष्मणि कफे च न पथ्यम् । तच्च क्वथितशीतलं पर्युषितं विगताहोरात्रं सद्वन्हिगुणाद्भ्रष्टं भवति । अम्लविपाकं दोषकरं च ॥

—तोयं हिमकरोद्भवम् ।
अतिशैत्यगुरुस्थैर्यसंघातैः कफवातकृत् ॥
चन्द्रकान्तभवं रक्षोविषपित्तज्वरापहम् ।
दाह्निमेनायपुरुष्यकरं स्वादु हिमं लघु ॥
नालिकेरोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ।
तृष्णापित्तानिलहरं दीपनं बस्तिशोधनम् ॥

हिमकरसुतं तोयमतिशैत्यादिना वातश्लेष्मकरं चन्द्रकान्तमणिसुतं रक्षोघ्नत्वादियुक्तम् । नालिकेरान्तर्जलं स्निग्धं बस्तिशोधनम् ॥

दिव्यं वारि वरं वर्षे नादेयमवरं परम् ।
इति तोयवर्गः ।

वर्गमुपसंहरति । वर्षाकाले आन्तरिक्षं जलं श्रेष्ठम् । नदीसंभवमवरम् । इति तोयवर्गः ॥

स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्धनम् ।
वातपित्तहरं वृष्यं श्लेष्मलं गुरुशीतलं ॥
प्रायः पयः—

तोयानन्तरं क्षीरवर्गमाह । स्वादुपाकरसमित्यादि । सर्वमपि विशेषेण क्षीरजातं मधुररसं मधुरविपाकं इत्यादियुतम् । ओजसे हितमोजस्यम् ओजोनाम धातुसारभूतं वक्ष्यमाणलक्षणम् । वृष्यत्वेन शुक्रवृद्धिकरत्वं । प्रायोग्रहणेन सर्वमेव क्षीरं पयसाम् ॥

—अत्र गव्यन्तु जीवनीयं रसायनम् ।
क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम् ॥
श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः ।
जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत् ॥

सामान्येन पयोगुणसंकीर्तनं कृत्वा तत्तद्विशेषेण क्रियते । तत्र च सामान्योक्तगुणविपरीतगुणविशेषगुणः सोऽनुपादौ विज्ञेयः । अर्थात् सदृशः स तदर्थोपबृंहकः । गव्यन्तु जीवनीयत्वादियुतम् । जीवनीयं सम्यग्धातुवृद्धिकरम् । रसायनमिति रसायनं प्राणमन्धारकत्वात् ज्वरादिशान्त्यभावाय । क्षतयुक्ताय क्षीणाय च हितम् । क्षीणः क्षीणधातुः । मेधायै बुद्धये हितं मेध्यम् । क्षीणानां स्तन्यवृद्धिं करोति । सरं शरीरं नवतां नियति । श्रमादींश्च नाशयेत् ॥

हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमम् ।

माहिषं पयोऽत्यग्नीनामनिद्राणां च हितं पथ्यम् । अतिगुरु च । वीर्येण च हिमम् ॥

अल्पाम्बुपानव्यायामकटुतिक्ताशनैर्लघु ॥
आजं शोषज्वरश्वासरक्तपित्तातिसारजित् ।

अजाना पयः अल्पाम्बुपानादिहेतोर्लघु हेतुकीर्तनमस्यास्याश्रयेण हेतुयुक्ताजाने धर्मलघुत्वज्ञापनार्थम् एतद्विपरीतायाश्च गुरुत्वं सामर्थ्यलभ्यम् । अजानान्तु स्वल्पाम्बुपानादि स्वभावः । अभ्यासात्तु देशापेक्षया । एतच्चाजं शोषादिविनाशनम् ॥

ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ॥
शस्तं वातकफानाहकृमिशोफोदरार्शसाम् ।

औष्ट्रमुष्ट्रसम्बन्धि क्षीरं ईषद्रूक्षमीषदुष्णमीषल्लवणम् । दीपनम् । लघु च वातादिनाशनमिति पथ्यम् ॥

मानुषं वातपित्तासृगभिघाताक्षिरोगजित् ॥
तर्पणाश्च्योतनैर्नस्यैः—

मानुषं क्षीरं वातं पित्तमसृक् अभिघातं अक्षिरोगाणां नाशनम् । कथमित्याह । तर्पणेन आश्च्योतनेन नस्येन च । एतानि शालाक्ये स्थाने वक्ष्यमाणलक्षणानि ॥

—अहृद्यं तूष्णमाविकम् ।
वातव्याधिहरं हिध्माश्वासपित्तकफप्रदम् ॥

आविकमहृद्यमुष्णवीर्यं वातव्याधिविनाशनं हिध्माकरं च ॥

हस्तिन्याः स्थैर्यकृत् बाढं—

हस्तिन्या पयोऽत्यर्थमतिशयेन शरीरस्थैर्यकृत् ॥

—उष्णं त्वैकशफं लघु ।
शाखावातहरं साम्ललवणं जडताकरम् ॥

एकशफस्यैकखुरस्य पयः उष्णवीर्यं शाखावातहरं मधुररसमीषदम्ललवणेन च रसेन युतं जाड्यकरं च । एककोशिमान् खुरोऽस्य स एकशफः अश्वगर्दभादिः । शाखाः रक्तादयो धातवस्त्वक् च । तत्स्थितस्य वातस्य नाशनम् । जाड्यं स्तैमित्यम् ॥

पयोऽभिष्यन्दि गुर्वामं युक्त्या शृतमतोऽन्यथा ।
भवेत् गरीयोऽतिशृतं धारोष्णममृतोपमम् ॥

इति पयः स्वरूपेणोक्त्वा संस्कारेणाह । आमपक्वं पयः अभिष्यन्दि गुरु च । अभिष्यन्दि पैच्छिल्येन स्रोतसां रोधकम् । युक्त्या शृतं पयः आमादिविपरीतम् । नातिशृतं न चाल्पशृतमिति युक्तिः । अतिशृतमत्यतिगुरु । धारोष्णममृतोपमं पथ्यत्वेन ॥

पिण्याकाम्लाग्निनीनां तु गुर्वभिष्यन्दि तत् भृ-
[शम् ।
अचेष्टया च मांदोपात् गरीयः स्मृतमौपसम् ॥
व्याख्यातस्तेन लघिमा चेष्टावत्प्रकृतिष्वपि ।
हस्वेषु चातिदेहेभ्यो मांसेष्वप्ययमादिशेत् ॥

रिण्याकं निर्पीडितरसं तिलादि । अम्लरसं चायत् किंचित् गाः क्षीरयोनयःअश्नन्ति तासां पयः अतिगुर्वत्यभिष्यन्दि च । प्रदोषे अपराह्णे गृहीतं यत् पयः तदपेक्षया औषसं प्रभातगृहीतं अतिगुरु । कुतः चेष्टारहितत्वात् यस्मात् प्राणिनां रात्रौ न कदाचिच्चेष्टा भवति अत औषसं गुरु । दिवा च धावनप्लवनादिकया चेष्टया प्रादोषं लघु । अनया च दिशा चेष्टाबहुलेष्वपि लघिमा व्याख्यातः । तेनैतदुक्तं भवति चेष्टास्वभावेषु हरिणादिषु लघु । अचेष्टास्वभावेषु सूकरादिषु गुरु । अतिदेहान्महाभोगशरीरानपेक्ष्य स्वल्पाभोगशरीरेषु लघु पयः । न केवलं पयस्तु यावन्मांसेष्वपि चेष्टास्वल्पत्वबृहत्वानिशेषेण गुरुलाघवं विज्ञेयम् ॥

अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित् ।
मेदःशुक्रबलश्लेष्मपित्तरक्ताग्निशोफकृत् ॥
रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ।
पीनसे मूत्रकृच्छ्रे च रूक्षन्तुग्रहणीगदे ॥
नैवाद्यान्निशि नैवोष्णं वसन्तोष्णशरत्सु न ।
नामुद्गसूपं नाक्षौद्रं नाघृतं नासितोपलम् ॥
न चानामलकं नापि नित्यं नो मन्दमन्यथा ।
ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमम् ॥

दधि त्वम्लविपाकत्वादियुक्तम् । रोचिष्णु साधु रोचते । अरुचौ पथ्यम् । अन्यदप्याहारं रोचयतीत्यर्थः । शीतके शीतपूर्वके विषमज्वरे सततकादौ पथ्यम् । पीनसो नासास्रावः । रूक्षन्तूद्धृतसारं ग्रहणीदोषे हितम् । तच्च दधि रात्रौ न भोज्यं एवकारो रात्रावुष्णे चात्यन्तप्रतिषेधाय । वसन्तग्रीष्मशरत्सु न भोज्यं न च मुद्गसूपादीनामन्यतमेन रहितम् । नापि नित्यं सातत्येन न भोज्यं न च मन्दमजातम् । एवं च सति यदि कश्चित् भुंक्ते सोऽवश्यं ज्वरादीन् प्राप्नोति ॥

तक्रं लघु कषायाम्लं दीपनं कफवातजित् ।
शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः ॥
गुल्मप्लीहघृतव्यापद्गरपाण्ड्वामयान् जयेत् ।
तद्वन्मस्तु सरं स्रोतश्शोधि विष्टंभजिल्लघु ॥

तक्रं दण्डेन मथितादधः उद्धृतःनुद्धृते वा स्नेहे तत्तक्रं लघुत्वादियुक्तम् । घृतव्यापत् घृतस्यातिपानादुत्पन्नो रोगः । गरो वक्ष्यमाणलक्षणः तद्वत्तक्रवत् गुणैर्मस्तु विज्ञेयं मस्तुनः स्रोतश्शोधकत्वेन विष्टंभनाशकत्वेन च विशेषः तक्रस्य स्रोतश्शोधकत्वेऽपि मस्तुनोऽतिशयः ॥

शीतं स्वादु कषायाम्लं नवनीतं नवोद्धृतं ।
यक्ष्मार्शोर्दितपित्तासृग्वातजिद् ग्राहि दीपनम् ।
क्षीरोद्भवं तु संग्राहि रक्तपित्ताक्षिरोगजित् ।

नवोद्धृतं सद्यउद्धृतं नवनीतं शीतं शीतवीर्यं मधुरं कषायाम्लत्वेन च युक्तं राजयक्ष्मादिनाशनं संग्राहि दीपनं च । संग्राहि यद्द्रवान् भावान् पिण्डीकरोति । क्षीरोद्भवनवनीतं रक्तपित्ताक्षिरोगं नाशयति । संग्राहि च । क्षीरोद्भवं यत् क्षीरमेव मथित्वोत्पादितम् ॥

शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम् ॥
बालवृद्धप्रजाकान्तिसौकुमार्यस्वरार्थिनाम् ।
क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम् ॥
वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ।
स्नेहानामुत्तमं शीतं वयसः स्थापनं घृतम् ॥
सहस्रवीर्यं विधिभिः घृतं कर्मसहस्रकृत् ।
मदापस्मारमूर्छायशिरःकर्णाक्षियोनिजान् ॥
पुराणं जयति व्याधीन् व्रणशोधनरोपणम् ।
पूर्वोक्तांश्चाधिकान् कुर्यात् गुणांस्तदमृतोपमम् ।
तद्वच्च घृतमण्डोऽपि रूक्षस्तीक्ष्णस्तनुश्च सः ।

घृतन्तु धीप्रभृतीनामभिलषितात्मान्तानां शस्तं हितम् । धीर्बुद्धिर्वस्तुग्रहणे शक्तिः । स्मृतिरतीतविचारे शक्तिः । मेधा प्रज्ञा वस्तुविवेकशक्तिः । प्रजार्थिनाञ्च । प्रजा अपत्य शुक्रस्य सफलताकरमित्यर्थः । वयःस्थापनं जरयाविना वयः स्थापयतीति वयःस्थापनम् । सहस्रवीर्यमनेकशक्ति । तथा विधिभिर्विधानैर्नानाविधाभिर्योजनाभिः कर्मसहस्रकृदनेककार्यकृदित्यर्थः । तच्च घृत पुराणमतीतबहुकालं मदादीन् व्याधीन् जयति । व्रणानां पैच्छिल्यादिकं शोधयति । व्रणांश्च रोपयति । तच्च पुराणं पूर्वोक्तान् सामान्यघृतोक्तान् गुणाधिक्येन करोति । अमृतोपमं च । घृत-

मण्डोऽपि घनगुणानामीषत् कृर्यादमूलोऽग्रमथ केवलम् सौक्ष्म्येन तनुत्वेन चास्य विशेषः । मण्डउपरिभागः स्याच्छ.

किलाटदधिकूर्चिकातक्रपिण्डकमोरटाः ॥
सक्षीरशाकपीयूषरोचनावडिगाङ्गनाः ।
शुक्रनिद्राकफकराविष्टंभिगुरुदोषलाः ॥

कीलाटादयः सर्वे क्षीरविकाराः तद्विकृतिविशेषाश्च । बलकारकाः अतिमात्राः शुक्रादिकराश्च विष्टम्भिनो गुरवो दोषलाश्च । दोषलाभरणत्वेन विकारकारित्वं । किलाटादयः क्लाटादिकृताः । कूर्चिकाः क्षीरकीलाटिका । मोरट थ रसवशः किलाटिका । पीडन उत्तरार्धे प्रसिद्धः । क्षीर. शाकं प्रसिद्धं पीयूषं नवप्रसूताया क्षीरमेव इति ॥

विद्याद्दधिघृतादीनां गुणदोषान् यथाश्रयः ।

यथाश्रयं पयोगुणानुक्रमेण गुणा विशेष दधिघृ. तादेः भवन्ति । यथा स्वादुपाकरसमधुरादिना सामान्येन क्षीरगुणाउक्तास्तद्वत् सामान्येन दध्यादिगुणाअपि विशेषाकोशा. या तु दध्यादीनां सत्स्वपि सामान्यगुणेषु प्रकृतिभूतक्षीरगुणान्वयोऽपि ग्राह्यः ॥

वर्गार्थं निर्धारयति ।

गव्ये क्षीरघृते श्रेष्ठे निन्दिते चाऽविसंभवे ॥

इति क्षीरवर्गः ।

क्षीरं घृतञ्च गव्यं श्रेष्ठम् । आविकं निन्दितं प्राधान्यात् क्षीरघृतयोरेव ग्रहणम् । इति क्षीरवर्गः ॥

इक्षोस्सरो गुरुः स्निग्धो बृंहणः कफमूत्रकृत् ॥
वृष्यश्शीतः पवनजित् भुक्ते वातप्रकोपनः ।
रक्तपित्तप्रशमनः स्वादुपाकरसो रसः ॥

इक्षुरसवर्गोऽयप्रसंगेनोच्यते । इक्षोरसः सरत्वादिगुणयुक्तः बृंहणो वक्ष्यमाणलक्षणः पवनजिद्वातनाशनः । भुक्ते भुक्तमात्रे पीतो वातप्रकोपनः ॥

सोऽग्रे सलवणो दन्तपीडितः शर्करासमः ।

स च रसः अग्रे इक्षोः प्रान्ते जातः । सलवण ईषल्लवणः दन्तपीडितोऽयन्त्रकाद्यनुपहतत्वात् गुणैः शर्करया समः ॥

मूलाग्रजन्तुजग्धादिपीडनान्मलसंकरात् ।
किञ्चित्कालविधृत्या च विकृतिं याति यान्त्रिकः ॥

विदाही गुरुविष्टंभी तेनासौ—

यन्त्रं यान्त्रिकोऽसौ मूलाग्रजन्तुजग्धादिपीडनात् मल. संकरात् किञ्चित् कालविधृत्या विकृतिं याति । जन्तुजग्धः क्रिमिभक्षितः । विदाही अम्लभावविदहनशीलः । जन्तुविदाहि भावात् कार्यावस्थाविदग्धताम् । गुरुत्वं च विष्टंभि विशेषेण विदहनशीलत्वात् अयमेव विदाहः ॥

—तत्र पौण्ड्रकः ।
शैत्यप्रसादमाधुर्याद्वरस्तमनु वांशिकः ॥
शातपर्वककान्तारनैपालाद्यास्ततः क्रमात् ।
सक्षाराः सकषायाश्च सोष्णाः किञ्चिद्विदाहिनः ॥

तत्र इक्षुरसेषु मध्ये पौण्ड्रकः शैत्येन प्रसादेन मा. धुर्येण च श्रेष्ठः सर्वेक्षुरसेभ्यः । तमनु वांशिकः शैत्यादि. भिः पौण्ड्रकादनन्तरमधिकत्वार्थः । शातपर्वकादयश्च रसाः क्रमादुत्तरोत्तरं शैत्यादिभिर्हीनाः । ते च शातपर्वकादयः ईषत्क्षारत्वेन युक्ताः ईषत् कषायरसानुरसगुणाः किञ्चि. द्विदाहिनश्च ॥

फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम् ।
नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृद् गुडः ॥
प्रभूतकृमिमज्जासृङ्मेदोमांसकफोऽपरः ।
हृद्यः पुराणः पथ्यश्च नवः श्लेष्माग्निसादकृत् ॥

फाणितं क्षुद्रगुडोऽभूतात्मिक्षुरसः । तत् गुर्वभिष्यन्दि त्रिदोषसञ्चयकृत् मूत्रसंशोधनं मूत्रमतिशोधयति । गुडः सं. स्कारस्नेहेन निर्मलः नातिश्लेष्मकरः ईषत् श्लेष्मकर इत्यर्थः । तथा मूत्रं शकृच्च सृजति बहिः क्षिपति तथा अपरः अ. धौतः प्रभूतान् क्रिम्यादीन् करोतीत्युपचारात् स एवैनः । स एव च गुडः पुराणो हृद्यः शरीरस्य च पथ्यः । नवस्तु कफमग्निमान्द्यं च करोति ॥

वृष्याः क्षीणक्षतहिता रक्तपित्तानिलापहाः ।
मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तमाः ॥
तद्गुणा तिक्तमधुरा कषाया यासशर्करा ।
त्रिदोषघ्नी सिताकाशेक्षुदर्भच्छदसंभवा ॥
दाहतृट्छर्दिमूर्छासृक्पित्तघ्न्यः सर्वशर्कराः

मत्स्यण्डिकादयस्त्रयोऽप्युत्पलादिगुणाः क्रमेण । पूर्वस्मादुत्तरोत्पलादिभिरतिशयेन युक्ताः । मत्स्यण्डिकाखण्ड. निर्मलाः प्रसिद्धाश्च लोके । ततोऽपि संस्कारेण गुणैश्च

गुरु तद्दोषजननं नवं जीर्णमतोऽन्यथा ।
पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः ॥
नातितीक्ष्णमृदुस्वच्छघनं व्यापन्नमेव वा ।

मद्यमुच्यते। सर्वं मद्यं दीपनादिगुणयुक्तम्। तुष्टिर्मनःपरितोषः । पुष्टिः शरीरपोषः । नष्टनिद्रस्य चातिनिद्रस्य चाऽऽहारविशेषाद्भेदादिव्ये करोति । प्रभाताद्या। एवं कृतस्थूलशरीरे युक्त्यां मात्रादिकया पीतमेवंगुणम् । अयुक्त्या विपरीतम् । सा च युक्तिर्देशकालविशेषैर्वरसेवनात् आचरणं वा । तत्र सर्वं मद्यं नवमनतीतसंवत्सरं गुरु त्रिदोषकरं च । केषांचिन्मतानां कतिपयदिनपरिवासो नवत्वम् । क्रमेण च तन्नाशः । जीर्णं पुराणमेतद्विपरीतम् । तच्च मद्यमुष्णोपचारेण न पेयम् । उष्णवेश्माहारादिकमुपचारं यदस्तीति । क्षुधादिभिरार्तैश्चादोषसाम्यात्र पेयम् । अतितैक्ष्ण्यमार्दवादियुक्तं च न पेयम् । व्यापन्नं देशकालाद्युपहतम् ॥

अनन्तरं मद्यविशेषा उच्यन्ते ।

गुल्मोदरार्शोग्रहणीशोषहृत् स्नेहनी गुरुः ॥
सुराऽनिलघ्नी मेदोऽसृक्स्तन्यमूत्रकफावहा ।

सुरा गुल्मादिनाशिनी मेदोरक्तादिकरी च । सुरा पिष्टकृता घना श्वेता ॥

तद्गुणा वारुणी हृद्या लघुस्तीक्ष्णा निहन्ति च
शूलकासवमिश्वासविबन्धाध्मानपीनसान् ।

वारुणी नाम सुरा तद्गुणा अनन्तरोक्तसुरासमगुणा। इयं तु लघ्वी तीक्ष्णा च । शूलादींश्च निहन्ति । विबन्धः स्रोतसामवरोधेन दोषादीनामवहनम् ॥

शूलप्रवाहिकाटोपतृष्णाशोफार्शसां हितः ॥
जगलः पाचनो ग्राही रूक्षस्तद्वच्च मेदकः ।
बक्कसो हृतसारत्वाद्विष्टंभी दोषकोपनः ॥

जगलो वारुण्याः सुराया अधोभागो घनः शूलप्रवाहिकादिहरः । प्रवाहिका नित्यानिका । आटोपो जठरे वायुना निश्चलेन सशब्दं पूरणम् । तथा पाचनः संग्राही रूक्षश्च । मेदकोनाम जगलस्याधोभागो गुणैर्जगलवद्विज्ञेयः । बक्कसोनाम पानीयेन मद्यकल्कक्षालितो हृतसारत्वाद्विष्टंभी त्रिदोषकोपनश्च ॥

नातितीव्रमदा लघ्वी पथ्या बैभीतकी सुरा ।
व्रणे पाण्ड्वामये कुष्ठे न चात्यर्थं विरुध्यते ॥
विष्टंभिनी यवसुरा गुर्वी रूक्षा त्रिदोषला ।
कौहली बृंहणी गुर्वी श्लेष्मलस्तु मधूलकः ॥

विभीतकस्य सुरा अतितीव्रं मदं न जनयति । लघ्वी पथ्या । व्रणादिषु चात्यर्थं न विरुद्धा । यवसुरा विष्टंभकरी गुर्वी रूक्षा त्रिदोषकरा च । कौहली सुरा बृंहणी गुर्वी च । मधूलकः श्लेष्मकरः । सर्वं मद्यमसज्जातं मधूलक इति स्मृतः ॥

यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः ।
ग्रहणीपाण्डुकुष्ठार्शःशोषशोफोदरज्वरान् ॥
हन्ति गुल्मकृमिप्लीह्नः कषायकटुवातलः ।

अरिष्टमुच्यते । स हि यैर्द्रव्यैः सिद्धस्तेषां गुणाननुगच्छति । सर्वैश्च दीपनत्वादिभिर्मद्यगुणैरधिकः । ग्रहण्यादिकांश्च रोगान्नाशयति । कषायकटुरसो वातकरश्च ॥

मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् ॥
अल्पपित्तानिलं पाण्डुमेहार्शःकृमिनाशनम् ।
अस्मादल्पान्तरगुणं खार्जूरं वातलं गुरु ॥

मार्द्वीकं द्राक्षारसं लेखनत्वादियुक्तम् । पित्तमनिलं चान्यमद्यापेक्षया स्वल्पं करोति । पाण्ड्वादिनाशनं च । योऽतितैक्ष्ण्यात् श्लेष्मादिकं निलिखति स लेखनः । खार्जूरमद्यं मार्द्वीकगुणैरूनम् । वातलं गुरु च ॥

शार्करः सुरभिः स्वादुर्हृद्यो नातिमदो लघुः ।
सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ॥
वातपित्तकरः सीधुः स्नेहश्लेष्मविकारहा ।
मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः ॥

शर्करया कृतं मद्यं सुरभित्वादियुक्तम् । सीधुर्वातपित्तकरः । स्नेहविकारान् श्लेष्मविकारांश्च नाशयति । सीधुः अपक्वेक्षुरसकृतः पक्वेक्षुरसकृतश्च । तत्र सीधुषु मध्ये पक्वरसो मेदःप्रभृतीनां नाशनः श्रेष्ठश्च ॥

छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित्
सुरासवस्तीव्रमदः स्वादुस्तीक्ष्णोऽनिलापहः ।
मैरेयो मधुरो हृद्यः सरः सन्तर्पणो गुरुः ।
वातघ्नश्चाभिषुतो जीर्णो रूक्षो रोचनदीपनः ॥
द्राक्षासवो मधूसमः परमं स तु दीपनः ।
मार्द्वीकरसदः प्रोक्तो मृद्वीकेक्षुरसासवः ॥

मध्वासवो माधवकोनाम मद्यविशेषः । छेदी तीक्ष्णोमेहादिघ्नश्च । शर्करासवो नामोत्कटमदः । मधुरस्तीक्ष्णो वातनश्च । मैरेयो मधुरत्वादियुक्तः । मैरेयः कोद्रवैः सह जायते । धातक्यासुतोजीर्णः पुराणः रूक्षोरुच्योऽग्निदीपनश्च न त्वेव नवः । द्राक्षासवोमधुसमो माक्षिकसमः । अयस्कान्त्यर्थदीपनः । मृद्वीकेक्षुरसाभ्यां कृतसन्धानासवोगुणैर्माद्वीकसमः ॥

**समासादासवोहृद्यो वातळः सौषधानुगः ।**

समासात् संक्षेपतः आसवगुणा उच्यन्ते यः पाक्षिदासवः स सर्वोहृद्यो वातळः स्वौषधगुणश्च । आसवो योद्रव्येण शुष्कमासुत्य क्रियते ॥

**द्राक्षेक्षुमाक्षिकं शालिरुत्तमा व्रीहिपञ्चमाः ॥**
**मद्याकरा यत्तेभ्योऽन्यत्तन्मद्यमतिरूपकम् ।**
**गुणैर्यथोद्धणैर्विद्यान्मद्यमाकरसंकरात् ॥**

द्राक्षादयः पञ्चोत्तमा मद्याकरा मद्ययोनयः । एतद्वर्जितमन्यन्मद्यप्रतिरूपकम् । आकरसंकराच्च मद्यं गुणैर्दीप्तन्यादिभिर्यथोद्धणं विद्यात् । उद्धणस्य गुणाननुवर्तेत इत्यर्थः । तेनैतदुक्तं भवति । द्विमद्याकरमिश्रीभावजातमद्यमुद्धणेनाधिकेनाऽऽकरद्रव्येण सामानगुणम् । यो ह्याकरसंयोगेऽधिकं भवति तद्गुणं मद्यमित्यर्थः ॥

**रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ।**
**विदाहिभृशतीक्ष्णोष्णं हृद्यं रुचिकरं सरम् ॥**
**दीपनं शिशिरस्पर्शं पाण्डुदृक्क्रिमिनाशनम् ।**

शुक्तं रक्तपित्तकफानुत्क्लेदयति । वातमनुलोमयति । विदाहित्वादिगुणयुक्तं च ॥

**गुडेक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरम् ॥**
**कन्दमूलफलाद्यांश्च तद्वद्विद्यात्तदासुतान् ।**
**शाण्डाकी चाऽऽसुतं चान्यत् कालाम्लं रोचनं लघु**

गुडादिशुक्तानां यथोत्तरं लघुत्वं विज्ञेयम् । गुडकृतान्छुक्तादिक्षुशुक्तं लघु । इक्षुशुक्तादन्यन्मद्यशुक्तं लघु । सर्वमद्यशुक्ताच्च मार्द्वीकशुक्तं लघु । अन्ये तु ब्रुवते । गुडमद्यशुक्तादिक्षुमद्यशुक्तं लघु । इक्षुमद्यशुक्तान्मार्द्वीकमद्यशुक्तमिति । पूर्वस्तु पक्षो युक्तइति निर्णीतः । तथा धातकीगुडनोशादिकारणमद्यशुक्तोऽरिष्टकम् । कन्दादिकञ्च तदासुतं गुडशुक्ताद्यासुतं तद्वद्विद्यात् । आसवनशुक्तसमानगुणं जानीयादित्यर्थः । शाण्डाकी च शाकान्यासुत्य क्रियते या सा चान्यच्चाप्यनुक्तमासुतमासवनशुक्तगुणम् । कालेनाम्लं सद्रुच्यं लघु च कालाम्लं नाम ॥

**धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत् स्पर्शशी-**
**[तळम् ।**
**श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत् ॥**
**शस्तमास्थापने हृद्यं लघु वातकफापहम् ।**

धान्याम्लं काञ्जिकं भेदित्वादियुक्तम् । उष्णवीर्यम् । स्वभावेनैव स्पर्शशीतलम् । व्यायामादिना तान्तत्वं श्रमः । निर्व्यायामादेव तान्तत्वं क्लमः । आस्थापनं यातनाशायनेत्रेण द्रव्यस्य गुदप्रणिधानम् ॥

**एभिरेव गुणैर्युक्ते सौवीरकतुषोदके ॥**
**क्रिमिहृद्रोगगुल्मार्शःपाण्डुरोगनिबर्हणे ।**
**ते क्रमाद्वितुषैर्विद्यात्सतुषैश्च यवैः कृते ॥**

सौवीरकतुषोदके धान्याम्लगुणयुक्ते । क्रिम्यादिनाशने च । सौवीरकतुषोदके क्रमेणानुपूर्व्या वितुषैः सतुषैश्च यवैर्विद्यात् । तेनैतदुक्तं भवति । सौवीरकं यवैरतुषैर्यवैः क्रियते । तुषोदकं यवैस्सतुषैः क्रियते ॥

**मूत्रं गोजाविमहिषीगजाश्वोष्ट्रखरोद्भवम् ।**
**पित्तळं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ॥**
**क्रिमिशोफोदरानाहशूलपाण्डुकफानिलान् ।**
**गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ॥**
**विरेकास्थापनालेपस्वेदादिषु च पूजितम् ।**
**दीपनं पाचनं भेदि तेषु गोमूत्रमुत्तमम् ॥**

द्रवत्वात्तीक्ष्णत्वादेश्च प्रसङ्गेन च मूत्राण्यप्युच्यन्ते । गवादीनां मूत्रं पित्तळत्वादिगुणयुक्तम् । क्रिम्यादींश्च जयेत् । लघु च । रसे कटु । लवणमनुरसं स्वल्पं यस्य तत्तथाविधम् । विरेकादिषु च शस्यते । दीपनत्वादिगुणञ्च । मूत्रेषु च मध्ये गोमूत्रमुत्तमं प्रधानम् ॥

**श्वासकासहरं छागं पूरणात् कर्णशूलजित् ॥**
**दद्यात् क्षारे किलासे च गजवाजिसमुद्भवम् ।**
**हन्त्युन्मादमपस्मारं क्रिमीन्मेहञ्च रासभम् ॥**

छागमूत्रं कासश्वासहरम् । कर्णपूरणेन च कर्णशूलजित् । दन्तितुरगमूत्रे किलासे श्वित्रे उपयोगार्थं दद्यात् । क्षारे च पच्यमाने । रासभं मूत्रमुन्मादादीन् हन्ति ॥

कषायतिक्त मेतेषां हिध्माश्वासहरं शकृत् ।
मार्गमोजःक्षयहरं वर्च्किरं वातरोगनुत् ॥

प्रसहानामपस्मारमुन्मादश्च नियच्छति ।
महास्थगसमुत्भूतं कुप्रहज्जलचारिणाम् ॥
नेत्ररोगहरं पित्तं मद्यद्धं च नियच्छति ।

एतेषामनन्तरोक्तानां मृतप्राणिनां शकृत् पुरीषं रसेन कषायतिक्तम् । हिध्माश्वासहरञ्च । अन्यत्सुबोधम् ॥

पित्तं तिक्तं विषहरं रोचना कफवातजित् ॥
तिक्तापाप्माहरा—

एतेषामेव पित्त जाठरमुपयुक्तं तिक्तरसं विषहरञ्च । एतेषामेव रोचना नाभिप्रदेशभवा वातश्लेष्मविनाशिनी तिक्तरसा पाप्माहरा च ॥

—मूत्रं मानुषन्तु विषापहम् ।
इति मद्यवर्गः ॥

मानुषन्तु मूत्रं विषघ्नम् । इति मद्यवर्गः ॥

तोयक्षीरेक्षुतैलानां वर्गमद्यस्य च क्रमात् ।
इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः ॥

इत्यनन्तरोक्तेन प्रकारेण तोयादिवर्गैः प्रधानानतिक्रमेण द्रवाणामेकदेश उदाहृतः ॥

इतीन्दुविरचितायामष्टांगसंग्रहव्याख्यायां
सूत्रस्थाने षष्ठोऽध्यायः.

## सप्तमोऽध्यायः

द्रवस्यपानाप्रसंस्कारात्पर्याप्तत्वादन्नमुच्यते ।

अथातअन्नस्वरूपविज्ञानीयं नामाध्यायं व्याख्यास्यामः। इतिहस्माऽहुरात्रेयादयोमहर्षयः॥

* "क्रिमिहरः" इत्यपि पाठः ।

रक्तोमहान् सकलमस्तूर्णकः शकुनाहृतः ।
शारामुखोदीर्घशूको लोध्रशूकः सुगन्धिकः ॥
पुण्ड्रः पाण्डुः पुण्डरीकः प्रमोदोगौरशारिवौ ।
काञ्चनोमहिषः शूकोदूषकः कुसुमाण्डकः ॥
लांगला लोहवालाख्याः कर्दमाः शीतभीरुकाः
पतंगास्तपनीयाश्च ये चान्ये शालयः शुभाः ॥
स्वादुपाकरसाः स्निग्धाद्वृष्यात्रद्धाल्पवर्चसः ।
कषायालुरसाः पथ्यालघवोमूत्रलाहिमाः ॥

शूकधान्यानाञ्च प्राधान्यादमे पाठः रक्तादास्तपनीयान्ताअन्ये च देशकालरसादिना रक्तादिसदृशाः शालयस्ते सर्वे मधुरविपाकरसत्वादियुक्ताः एते च सर्वे नानादेशप्रसिद्धनामानः । बद्ध ग्रथितं अल्प च वर्चः पुरीषं कुर्वन्तीति बद्धाल्पवर्चसः स्वभावेनैव शरीरे हिताः ॥

शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा ।
महांस्तस्यानु कलमस्तस्याप्यनु ततः परे ॥

तत्र शूकजेषु मध्ये रक्तशालिः श्रेष्ठः तृष्णानाशनस्त्रिदोषनाशनश्च । ततो रक्तादूनो महान् । ततोऽप्यूनः कलमः । अनेनैव क्रमेण परे तूर्णकादयः पूर्वस्मादुत्तरोगुणैरून इत्यर्थः ॥

यवका हायनाः पांसुवाप्यनैषधकादयः।
स्वादूष्णागुरवःस्निग्धाः पाकेऽम्लाः श्लेष्मपि-
[त्तलाः॥
सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निन्दिताः ॥

यवकादयोमधुरत्वादियुक्ताः यश्च यस्मात् पूर्वः स तस्मान्निन्द्यः ॥

स्निग्धोग्राही लघुः स्वादुः त्रिदोषघ्नः स्थिरो-
[हिमः ।
षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः ॥
ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः ।
कुक्कुटाण्डकलावाख्यपारावतकसूकराः ॥
वरकोद्दालकोज्ज्वालचीनशारददर्दुराः ।
गन्धनाः कुरुविन्दाश्च गुणैरल्पान्तराः स्मृताः॥

षष्टिकोनाम व्रीहिः स्निग्धत्वादिगुणः । स्थिरः शरीरे अग्न्यायनशीलः । स च सर्वव्रीहिषु श्रेष्ठः । तस्य षष्टिकस्य द्वैविध्यं गौरः कृष्णगौरश्च असितगौरेन कृष्णगौरात् गौरः श्रेष्ठः । ततः षष्टिकात् गुणैर्महाव्रीह्यादयः क्रमेणोनाः ॥

स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरुः ।

एतेभ्यः षष्टिकरक्तादिभ्योऽन्योऽन्यो व्रीहिर्मधुरः अम्लविपाकः पित्तकरो गुरुश्च ॥

बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥

पाटलोनाम व्रीहिः त्रिदोषकर एव ॥

कंगुकोद्रवजूर्णाह्वगदीवरुणपादिकाः ।
श्यामाकतोयश्यामाकहस्तिश्यामाकशिल्विकाः
शिशिरोद्दालनीवारवरूकवरकोत्कटाः ।
मधूलिकान्तनिर्गण्डीवेणुपर्णीप्रशान्तिकाः ॥
गवेधुकाण्डलैहित्यतोयपर्णीमुकुन्दराः ।
कफपित्तहरा रूक्षाः कषायमधुरा हिमाः ॥
वातला बद्धविण्मूत्रा लघवो लेखनात्मकाः ।

कंग्वादयः कफपित्तहरत्वादिगुणाः अतएव निर्धार्यते व्रीहियोर्विशिष्टाः शूकधान्याः ॥

भग्नसन्धानकृत्तत्र प्रियंगुर्बृंहणी गुरुः ॥
कोरदूषः परं ग्राही स्पर्शे शीतो विषापहः ।
उद्दालकस्तु वीर्योष्णो नीवारः श्लेष्मवर्धनः ॥
शीतवीर्या विशेषेण स्निग्धा वृष्या मधूलिका ।

प्रियंगुः कङ्गुः भग्नस्यांगस्य सन्धानं करोति । बृंहणी गुर्वी च कोरदूषः कोद्रवः अत्यर्थं ग्राहकः । स्पर्शे शीतो विषहरश्च । उद्दालकस्तु उष्णवीर्यः । नीवारः श्लेष्मवर्धनः । मधूलिका अत्यर्थं शीतवीर्या स्निग्धा वृष्या च सर्वेषां धान्यानां ... कल्पना च स्वयं कल्पनीया ॥

रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः
वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफान् जयेत् ।
पीनसश्वासकासोरुस्तम्भकण्ठत्वगामयान् ।
गुणैर्न्यूनतरोऽपायवादनुयवाह्वयाः ।
उष्णाः सरा वेणुयवाः कषाया वातपित्तलाः ॥

यवो रूक्षत्वादिगुणयुक्तः । एतैश्च त्वगामयनाशनान्तैः गुणैर्न्यूनाः अनुयवाः अनुयवनामानो यवाः । ते च यवात् न्यूनगुणाः किञ्चित् । वेणुयवास्तु उष्णवीर्याः सराः कषायरसाः वातपित्तलाश्च ॥

वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा ।
सन्धानकारी मधुरो गोधूमः स्थैर्यकृत् सरः ।
पथ्या नन्दीमुखी शीता कषाया मधुरा लघुः

इति शूकधान्यवर्गः ।

गोधूमो वृष्यत्वादिगुणः । जीवनः शीघ्रं धातुवृद्धिकरः सन्धानकारी भग्नस्यांगस्य सन्धानं करोति । नन्दीमुखी शालिविशेषः रसे कषायमधुरा लघ्वी च । इति शूकधान्यवर्गः ॥

शिंबिजा मुद्गगंगल्यवनमुकुन्दकुष्ठकाः ।
मसूरकलाढकचणकाश्च पृथग्विधाः ॥
कषायस्वादुलघवो विबन्धाध्मानकारिणः ।
रूक्षा बद्धमलाः शीता विपाके कटुका हिताः ॥
पित्तासृक्कफमेदःसु सूपालेपादियोजनात् ।

शिम्बिधान्यमध्ये मुद्गाद्याः पृथग्विधाः नानाविधाः । रसेन कषायमधुराः लघवः । विबन्धमाध्मानं च कुर्वन्ति । बद्धपुरीषाः । शीतवीर्या विपाके कटुकाः । भोजनालेपादियोजनाश्च रक्तपित्तश्लेष्ममेदःसु हिताः पथ्याः ॥

सूप्यानामुत्तमा मुद्गाल्पवीर्यासोऽल्पमारुताः ॥
हरितास्तेष्वपि वरा मकुष्ठाः क्रिमिकारिणः ।
वर्ण्याः परं मलेषाम्ये मसूरा ग्राहिणो भृशम् ॥

सूपे साधु सूप्यः । तेषां सूप्यानां मुद्गा उत्तमाः प्रवराः । अतिकृशाः स्वल्पवातकराश्च । तेषु मुद्गेषु मध्ये हरिताः शाड्वलवर्णाभाः श्रेष्ठाः । कृष्णास्तदनन्तराः । मकुष्ठास्तु क्रिमिकराः । मसूराः ग्राहकादिभिर्युक्ताः परमत्यर्थेन वर्णकरास्संग्रहणाश्च ॥

राजमाषो गुरुर्भूरिशकृद्रूक्षोऽतिवातलः ।
कषायस्वादुरूक्षोष्णाः कुलत्था रक्तपित्तलाः ॥
पीनसश्वासकासार्शोहिध्मानाहकफानिलान् ।
घ्नन्ति शुक्राश्मरीं शुक्रं दृष्टिं शोफं तथोदरम्
ग्राहिणो लवणास्तीक्ष्णा विपाकेऽम्ला विदाहिनः

राजमाषोगुरुः प्रभूतपुरीषः । रूक्षोतिवातलश्च । कुलत्थाः कषायमधुररूक्षा उष्णवीर्याः रक्तपित्तकराः पीनसादिनाशनाश्च । शुक्राश्मरीं घ्नन्ति । शुक्रं रेतः तेनाश्मरी वक्ष्यमाणा । दृष्टिं दर्शनशक्तिं च नाशयन्ति । संग्रहणालघवस्तीक्ष्णा अम्लविपाका विदाहिनः ॥

**निष्पावस्तु सरोरूक्षः कषायमधुरोगुरुः ॥**
**पाकेऽम्लोवातविष्टंभीस्तन्यमूत्रास्रपित्तकृत् ।**
**उष्णोविदाही दृक्छुक्रकफशोफविषापहः ॥**

निष्पावस्तु सरत्वादियुक्तः वातकरः उष्णवीर्यः विदाही दृशं रेतः कफं शोफं विषं च नाशयति । निष्पा घोराजशिंबिः ॥

**माषः स्निग्धोबलश्लेष्ममलपित्तकरः सरः ।**
**गुरूष्णोऽनिलहा स्वादुश्शुक्रवृद्धिविरेककृत् ॥**
**फलानि गुणवद्विद्यात् काकाण्डोलात्मगुप्तयोः**
**कुशाम्रशिंबी मधुरा वातपित्तहरा हिमा ॥**

माषः स्निग्धत्वादियुक्तः । मलं पुरीषम् । शुक्रस्य रेतसोवृद्धिं बहुत्वं विरेकं बहिःप्रेरणं च करोति । काकाण्डोलात्मगुप्तयोश्च फलानि माषवत् गुणैर्विद्यात् । काकाण्डोला कटभिः । कुशाम्रशिंबी नाम शिंबिधान्यम् सा मधुरा वातपित्तहरा शीतवीर्या च ॥

**मधुराश्शीतलागुर्व्योबलघ्न्योरूक्षणात्मिकाः ।**
**स्नेहाढ्याबलिभिर्भोज्या विविधाश्शिंबिजातयः**

अनुक्तानां सामान्यमुच्यते । विविधाश्शिंबिजातयोमधुराश्शीतवीर्यागुर्व्योबलघ्न्योरौक्ष्यापादनस्वभावाः । ताश्च स्नेहाढ्याघृतादिनाढ्यारसत्वेबलवद्भिः पुरुषैर्भोज्याः ॥

**स्निग्धोष्णतिक्तकटुकः कषायमधुरास्तिलः ।**
**मेध्यः केश्योगुरुर्वर्ण्यः स्पर्शशीतोऽनिलापहः ॥**
**अल्पमूत्रः कटुः पाके मेधाग्निकफपित्तकृत् ।**
**कृष्णः प्रशस्तस्तमनु शुक्लस्तमनुचारुणः ॥**

तिल. स्निग्धत्वादियुक्तः । रसे तिक्तादियुक्तः । विपाके कटुकः । मूत्रस्याल्पत्वकरोऽल्पमूत्रः । मेधाग्निकफपित्तकरश्च । मेधा प्रज्ञा । तेषु च तिलेषु मध्ये कृष्णतिलश्श्रेष्ठः । ततश्शुक्लऊनः । शुक्लादप्यरुणऊनतरः ॥

**स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरीगुरुः**
**दृक्छुक्रहृत् कटुः पाके तद्वत् बीजं कुसुंभजम् ॥**

उमा अतसी स्निग्धा रसेन मधुरतिक्ता उष्णवीर्या कफपित्तकरी गुर्वी च । दृशं शुक्रञ्च नाशयति । कटुविपाका च । तद्गुणावत् कुसुंभबीजम् ॥

**माषोऽत्र सर्वेष्ववरोयवकश्शूकजेषु च ।**
**नवं धान्यमभिष्यन्दि सेक्यं केदारजश्चयत् ॥**
**लघु वर्षोषितं दग्धभूमिजं स्थलसंभवम् ।**
**शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभार्जितम् ॥**

**इति शिंबिधान्यवर्गः ।**

अत्र शिंबिधान्यवर्गे माषः अश्रेष्ठः । शूकधान्यमध्ये यवकः अश्रेष्ठः । नवमगतसंवत्सरं धान्यमभिष्यन्दि माहिन्येन स्रोतसा स्रावकम् । तथा सेक्यं बहूदके केदारे जातं अभिष्यन्दि । लघु वर्षोषितम् । तथा दग्धभूमिजं । तथा स्थलसंभवं निरुदककेदारजम् । शीघ्रजन्म अचिरकालपाकम् । तथा सूप्यं मुद्गादि तुषरहितं युक्त्या च भर्जितं सत् निस्तुषम् । इति शिंबिधान्यवर्गः ॥

**मण्डपेयाविलेपीनामोदनस्य च लाघवम् ।**
**यथापूर्वं शिवस्तत्र मण्डोवातानुलोमनः ॥**
**तृड्ग्लानिदोषशेषघ्नः पाचनोधातुसाम्यकृत् ।**
**स्रोतोमार्दवकृत् स्वेदी सन्धुक्षयति चानलम् ॥**

धान्यानां स्वरूपमुक्तम् । अनन्तरोक्तानि रक्तादीनि सत्स्वपि स्वरूपगुणेषु संयोगसंस्कारप्रमाणादिविशेषेण गुणान्तरयोगमपि यान्ति तद्विज्ञानार्थं कृतान्नवर्गारंभः । मण्डादीनां यथापूर्वं लघुत्वम् । तेनैतदुक्तं भवति । ओदनमपेक्ष्य लघ्वी विलेपिका । ततोऽपि पेया द्रवा लघुतरा । ततोऽपि मण्डोऽत्यर्थद्रवोलघुः । ओदनस्य पूर्वकत्वाभावाच्च लघुत्वं न गुरुत्वमुक्तम् । एतदेव निर्धारयति । मण्डोवातस्यानुलोमनः । तृडादिघ्नश्च । दोषस्य वमनविरेचनादिना निर्हृतस्य शेषोदोषशेषः । पाचनोधातुसाम्यकरश्च । स्रोतोमार्दवं करोति । स्वेदयत्यग्निमुद्दीपयति ॥

**क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ।**
**मलानुलोमनी पथ्या पेया दीपनपाचनी ॥**

पेया क्षुदादिहरा ॥

**विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता**
**व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ॥**

विलेपिका सङ्ग्राहिणी हृद्या तृष्णाघ्नी दीपनी च व्रणादीनाञ्च हिता । संशुद्धः कृतवमनविरेचनः ॥

विष्टंभि मूत्रलं हृद्यं यथाद्रव्यगुणश्च तत् ।

रागाः सितामध्वादिकृताः । षाडवाअम्लसिद्धशाकशर्करादिकृताः । हृद्याश्च्यारुचिकराश्च गुरवश्च । तथा प्रीणना मनःप्रीतिकराः । श्रमादिनाशनाश्च । रसाला करमथितेन मरिचशर्करादिसंयुक्तेन च दध्ना कृता । सैषणी देहस्य बृंहणकरी वृष्यत्वादिगुणयुक्ता च । सर्वं च पानकं श्रमादिहरं प्रीतिकरं गुरु विष्टंभि मूत्रलं हृद्यं च । तच्च पानकं यथाद्रव्यगुणं स्वसंस्कारद्रव्यगुणसंयुक्तम् च ॥

लाजास्तृट्छर्द्यतीसारमेहमेदःकफच्छिदः ॥
कासपित्तोपशमना दीपना लघवो हिमाः ।
पृथुका गुरवो बल्याः कफविष्टंभकारिणः ॥
धाना विष्टंभिनी रूक्षा तर्पणी लेखनी गुरुः ।
कण्ठनेत्रामयक्षुत्तृट्श्रमछर्दिव्रणापहा ॥
सक्तवो लघवः पानात् सद्य एव बलप्रदाः ।
निचयात् कठिना गुर्वी मोक्ता पिण्डी मृदुर्लघुः
सक्तूनां द्रवतायोगाल्लघीयस्यवलेहिका ।
शष्कुलीमोदकादीनां व्याख्यातैव च कल्पना ॥
मोदकान्तरितान्न द्विर्न निशायां न केवलान् ।
न भुक्त्वा न द्विजैश्छित्वा सक्तूनद्यान्न वा बहून्
कर्कन्धुबदरादीनां श्रमतृष्णाक्लमच्छिदः ।
सक्तवोऽम्लरसा हृद्या यथाद्रव्यगुणाश्च ते ॥

लाजास्तृडादीन् छिन्दन्ति नाशयन्ति कासं पित्तश्चोपशमयन्ति । अग्निदीप्तिकरा लघवः शीतवीर्याश्च । पृथुका गुरुत्वादियुक्ताः । हरितान्यानि तंदुलश्च मुसलाहतानि पृथुकशब्दवाच्यानि । धाना भृष्टधान्यानि विष्टंभिनी रूक्षादिगुणयुता च । सक्तवः कण्ठामयनेत्रामयादिनाशनाः लघवः । उदकेन पीताश्च सद्यएव बलं कुर्वन्ति । तेषां सक्तूनां पिण्डीनिचयात् संहतत्वात् या कठिना सा गुर्वी । या तु मृद्वी सा तु लघुः । ये तु सक्तवः उदकमिश्रा अवलिह्य भुज्यन्ते सा अवलेहिका द्रवत्वयोगात् लघीयसी । शष्कुलीमोदकादीनां भक्ष्याणामेवानयैव संयोगसंस्कारकाठिन्यादिविशेषदिशा गुणकल्पना व्याख्याता । सक्तूंश्चैवंविधान् नाद्यात् । उदकान्तरितानुदकेन जलेनान्तरितान् व्यवहितान् । आदौ पिण्डी मध्ये जलमन्ते च पिण्डीमुदकान्तरितान् । द्वौ वारौ द्विः । निशायां रात्र्याम् । केवलानुदकादिरहितान् । भुक्त्वा चान्यदोदनादि । द्विजैश्छित्वा दन्तैः कर्तयन् पिण्डीं छित्वेत्यर्थः । बहूंश्च सक्तूनाद्यात् । कर्कन्धुबदरादीनाश्च फलादीनां सक्तवः श्रमादिच्छिदः अम्लरसाश्चाथ । ते सर्वे सक्तवः प्रकृतिद्रव्यगुणयुताः ॥

पिण्याको ग्लपनो रूक्षो विष्टंभी दृष्टिदूषणः ।
वेशवारो गुरुः स्निग्धो बलोपचयवर्धनः ॥
मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः ॥

पिण्याकोऽथ तिलादीनां निष्पीडिततैलकल्कः । ग्लानिकरो विष्टंभी दृष्टिविकारकरश्च । वेशवारः नागरधनिकाजाज्यादिसंस्कृतं सुसमच्छिन्नं मांसम् । स गुरुः स्निग्धः बलवर्धनोपचयवर्धनश्च । मुद्गादिजास्तु वेशवाराः ये सूक्ष्मच्छिन्नमुद्गयवधान्यादिभिः क्रियन्ते । लोके च पूरणमिति प्रसिद्धाः ते गुरवः प्रकृतिद्रव्यगुणाश्च । आदिग्रहणेन तिलविधान्यानाश्च वरकमुकुराणामुद्गकादीनाश्च ग्रहणम् ॥

कुकूलकर्परभ्राष्ट्रकन्द्वङ्गारविपाचितान् ।
एकयोनीन् लघून्विद्यादपूपानुत्तरोत्तरम् ॥
इति कृतान्नवर्गः ॥

कुकूलादिसिद्धानपूपान् एकयोनीनेकशालिकारणात् सतोयथोत्तरं लघूनितिजानीयात् । तेनैतदुक्तं भवति सजातीयात् कुकूलपक्वात् कर्परपक्वो लघुरपि संयोगेनकत्वात् । कर्परपक्वाच्च भ्राष्ट्रपक्वः । भ्राष्ट्रपक्वाच्च कन्दुपक्वः । कन्दुपक्वाच्चांगारपक्वः । एकयोनिग्रहणं भिन्नयोनिस्समत्वाय ग्रहणनिरासार्थम् । एकोऽप्युपूगुरुशालियोनिः कुकूलपक्वोऽन्येन लघुशालियोनिना कुकूलपक्वेनेव न लाघवे समः । तथा एकोलघुशालियोनिः कुकूलपक्वोऽन्यो गुरुशालियोनिः कर्परपक्वश्च समावित्यर्थः । अनया च कल्पनया सर्वमूह्यम् । कुकूलो भ्राष्ट्रभेदः । क्षारपाकरत्यन्ये । कर्परोऽन्त्वालातन्नास कपालः । भ्राष्ट्रं प्रतिद्धम् । कन्दुः अंगारतत्तो भित्तिः अंगारस्वरूपेणैव । इति कृतान्नवर्गः ॥

हरिणैणकुरंगर्ष्यगोकर्णमृगमातृकाः ।
कालपुच्छकचारुष्कवरपोतशशोरणाः ॥
श्वदंष्ट्रारामशरभकोहकारकशंवराः ।
करालकृतमालौ च पृषतश्च मृगाः स्मृताः ॥

अनन्तरं मांसमुच्यते । हरिणादयः पृषतान्ताः एकोनविंशतिमृगाभिधेयाः ॥

लाववार्तिकवर्तीररक्तवर्त्मककर्कराः ।
कपिञ्जलोपचक्राख्यचकोरकुरवाहवः ॥

वर्त्तकोवर्तिका चेति तित्तिरिः क्रकरश्शिखी ।
ताम्रचूडाख्यवरकगोनर्दगिरिवर्तिकाः ॥
तथा शारपदेन्द्राहवारटाश्चेति विष्किराः ।

लावादयो वारटान्ताएकत्रिंशन्निराहारस्य विकीर्य विक्षिप्य भक्षणाद्विष्किराः ॥

शतपत्रो भृंगराजः कोयष्टी जीवजीवकः ॥
खञ्जरीटकहारीतदुर्नामारिकुशाग्रहाः ।
लट्वा लट्वपोवदहा गोक्ष्वेलोडिण्डिमाणवः ॥
जटी दुन्दुभिपाकारलोहपृष्ठकुलिंगकाः ।
शारिकाशुकशांगांख्यचिरिटीककुयष्टिकाः ॥
मञ्जरीयकदात्यूहगोधापुलमियाल्मजाः ।
कळपिंकः परभृतः कपोतोऽङ्गारचूडकः ॥
पारावतः पाणविकइत्युक्ताः प्रतुदाद्विजाः ।

शतपत्रादयः पाणविकान्ताश्चतुस्त्रिंशदाहारस्य शाल्यादेः प्रतुद्य तुण्डेनाहत्य भक्षणाद्विजाः प्रतुदाः स्मृताः ॥

श्वेतः श्यामश्चित्रपृष्ठः कालकः काकुलीमृगः ॥
भेकचिल्लटकूचीका गोधाशल्यकशाण्डकाः ।
श्वपाहिकदलीश्वाविन्नकुलाद्या बिलेशयाः ॥

श्वेताद्या नकुलाद्यन्ता बिले भूगर्भे निषदनाद्बिलेशयाः ॥

गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः ।
मार्जारमूषिकव्याघ्रवृकबभ्रुतरक्षवः ॥
लोपाकजंबुकश्येनचाषोलूकश्ववायसाः ।
शशघ्नीभासकुररगृध्रचेश्यकुलिंगकाः ॥
धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ।

गवादयः मधुहान्ताः केचित् पक्षिणः केचिन्मृगाः । जात्या प्रसह्याहृत्य भक्षणाच्च प्रसहाः स्मृताः ॥

महिषन्यंकुरोहीतवराहरुरुवारणाः ॥
सृमरश्चमरः खड्गो गवयश्च महामृगाः ।

महिषादयो गवयान्ताश्च महामृगशब्दवाच्याः ॥

हंससारसकादंबबककारण्डवप्लवाः ॥
मृणालकण्ठचक्राह्वबलाकारक्तशीर्षकाः ।
उत्क्रोशपुण्डरीकाक्षनारारीमणितुण्डकाः ॥
काकातुण्डघनारावमद्गुक्रौञ्चांबुकुक्कुटाः ।
नद्यास्योमल्लिकाद्याश्च पक्षिणाजलचारिणः ॥

हंसादयो मल्लिकाद्यन्ताश्च जलएव चरणाज्जलचारिणः ॥

मत्स्यारोहितपाठीनकूर्मकुंभीरकर्कटाः ।
शुक्तिशंखोद्रुशंबूकशफरीवर्मिचन्द्रिकाः ॥
चुलुकीनक्रमकरशिंशुमारतिमिंगलाः ।
राजी चिलिचिमाद्याश्च मांसमित्याहुरप्सुजा ॥

रोहितादयश्चिलिचिमाद्यन्ताः नक्रादिनामत्स्याः । इत्यप्सुजा मांसमाहुः ॥

योनिष्वजाव्यौ व्यामिश्रगोचरत्वादनिश्चिते ।

एतासु चाष्टासु मांसयोनिषु मध्ये मिश्रयोनित्वान्मिश्रगोचरत्वादजाव्यौ अनिश्चिते । ते हि जांगलेऽपि देशे सम्भवतः आनूपेऽपि यद्यपि तित्तिरिरुभयचरः तथापि स एव तत्स्वभावत्वाज्जांगलेष्वेव पृथङ्नोक्तः । अजाअव्ययश्च केचिदत्र नानि केचिदानूपदाति पृथगुक्तौ । येषाञ्च नामपर्यायाः नानादेशप्रसिद्धा किरातकैवर्तादिभ्यः अपभ्रंशसंस्कारणाच्च ज्ञातव्याः । वर्तिका वर्तकाज्जात्यन्तरं न तु तस्य स्त्री ॥

आद्यान्त्या जांगलानूपा मध्यौ साधारणौ स्मृतौ
विकीर्यादिक्रियायोगभक्षणाद्विष्किरादयः ।

एषाञ्च वर्गाणां मध्ये आद्याश्चयों मृगविष्किरप्रतुदाः जांगला. जांगलशब्दवाच्याः । अन्त्याश्चयः महामृगजलचरमत्स्याआनूपाः । मध्यौ द्वौ बिलेशयप्रसहौ साधारणौ । विकीर्य भक्षणक्रियायोगाद्विष्किरादीनि नामानीत्युक्तम् ॥

तत्र बद्धमलारुच्यामांसानामुत्तमाहिमाः ॥
कषायस्वादुविशदालघवोजांगलाहिताः ।
पित्तोत्तरे वातमध्येसान्निपाते कफानुगे ॥

तत्र जांगलमांसक पुरीषं बद्धं कुर्वन्ति । रुचिकरामांसानाञ्चोत्तमाः । शीतवीर्यारसे कषायमधुराः विशदाल्पमनः । सन्निपाते च हिताः । किम्भूतस्याह पित्तोत्तरइत्यादि । यस्मिन् सन्निपाते पित्तमुत्तरमधिकं वातोमध्यः कफश्च स्वल्पः ॥

तास्रोऽत्र हरिणः कृष्णस्त्वेणो हृद्यस्त्रिदोषजित्
लघीयान् पटुसश्चासौ ग्राहीरूक्षोहिमश्शशः ॥
कटुपाकोऽग्निकृत् पथ्यस्सान्निपातेऽनिलावरे ।

अत्र चैणहरिणयोराकृत्या सदृशौ । केवल ताम्र

र्णो हरिणः कृष्णवर्णस्त्वेणः । असावेणो ह्यत्रिदोषहरः, अतिलघुः पटुतश्च । शशस्तु संग्रहणो रूक्षः शीतवीर्यः कटुविपाकोऽग्निवृद्धिकृत्, कनवायो सन्निपाते च पथ्यः ॥

तद्वल्लावोऽप्यरूक्षस्तु किञ्चिद्रूक्षः कपिञ्जलः ॥

पारावताः कपोताश्च तद्वदन्याः सुपूजिताः ।
ईषदुष्णगुरुस्निग्धा बृंहणा वर्तकादयः ॥
तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत् ।
ग्राही वर्ण्योऽनिलोद्रिक्तसन्निपातहरः परम् ॥
धन्वानूपविचारित्वात् स्निग्धोष्णगुरुबृंहणः ।

लावोऽपि तद्वच्छशवत् । केवलमसावरूक्षः । कपिञ्जलः किञ्चिद्रूक्षः । पारावतकपोतौ वनजातौ पथ्यौ । गृहभूतावपथ्यौ । वर्तीकात् प्रभृति यावज्जाङ्गलपरिसमाप्तिः तावत्सर्वे औष्ण्येन गुरुत्वेन स्निग्धत्वेन च ईषत् स्वल्प युक्ताः । तेष्वपि मध्ये तित्तिरिः श्रेष्ठः मेधादिकरः । संग्रहणो वर्ण्यो वाताधिकसन्निपातहरश्च । स तु तित्तिरिर्धन्वनि देशे विचरत्यानूपे च । अतः स्निग्ध उष्णो गुरुर्बृंहणश्च ॥

नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम् ।
तद्वच्च कुक्कुटो वृष्यो ग्राम्यस्तु श्लेष्मलो गुरुः ।
मेधानलकरा हृद्याः क्रकराः सोपचक्रकाः ॥
गुरुः सलवणः काणकपोतः सर्वदोषकृत् ।

शिखी मयूरो नातिपथ्यः । श्रोत्रादीनां पथ्यः । वयसश्च पथ्यः शीघ्रपरिणामरक्षणः । कुक्कुटस्तद्वन्मयूरवत् । अयं तु वृष्यः । ग्राम्यस्तु जनपदचारिविशेषवरः श्लेष्मलो गुरुश्च । क्रकराः मेधामग्निं च कुर्वन्ति हृद्याश्च । तद्वदुपचक्रकाः । काणकपोतो गुरुः किञ्चिल्लवणस्त्रिदोषकरश्च ॥

गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ॥
मूत्रशुक्रकृतो बल्या वातघ्नाः कफपित्तलाः ।

अतोऽनन्तरा विलेशयाद्या वर्गा यथोत्तरं गुरुत्वेनोष्णत्वेन चाधिकाः । स्निग्धत्वेन मधुरत्वेन चाधिकाः । यो यस्मादग्रेतनो वर्गः स तस्मात् गुरुत्वादिभिरधिक इत्यर्थः । तथा सर्वे मूत्रं शुक्रं च कुर्वन्ति । बल्या वातघ्ना, पित्तश्लेष्मलाश्च ॥

शीता महामृगास्तेषु क्रव्यादाः प्रसहाः पुनः ॥
चक्षुष्याः सृष्टविण्मूत्रा मांसलाः कटुपाकिनः ।
जीर्णार्शोग्रहणीदोषशोषार्तानां परं हिताः ॥
गोधा नियच्छति विषं मूषिकः शुक्रवर्धनः ।

तेषु वर्गेषु मध्ये महामृगाः शीतवीर्याः । प्रसहाः क्रव्यादाः क्रव्यं मांसं भुञ्जते ये प्रसहाः ते चक्षुष्याः । मूत्रं विशञ्च कुर्वन्ति । मांसवृद्धिकराः, कटुविपाकाः, जीर्णार्शःप्रभृत्यार्तानाञ्च पथ्याः । गोधा विषघ्नी । मूषिकः शुक्रवर्धनः शुक्रकरः ॥

शुष्ककासश्रमात्यग्निविषमज्वरपीनसान् ॥
कार्श्यकेवलवातांश्च गोमांसं सन्नियच्छति ।
चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः परम् ॥
गुरूष्णो महिषः स्निग्धः स्वप्नदार्ढ्यबृहत्त्वकृत् ।
तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः ॥

गोमांसं शुष्ककासादीन् नाशयति । विषमज्वरः सततकादिः । केवलवाता नान्यदोषसंयुक्ता । चटकाः कफहराः स्निग्धा वातघ्नाश्च परमत्यर्थं शुक्रकराः । महिषो गुरूष्णवीर्यः स्निग्धो निद्रादींश्च करोति । वराहः सूकरः तद्वन्माहिषवद्गुणश्चेय इत्यर्थः । असौ तु श्रमघ्नः, रुच्यादिप्रदश्च ॥

हंसः स्वरकरः पित्तरक्तजिन्मेदुरो हिमः ।

हंसः स्वरकरः, रक्तपित्तविनाशनश्च । यस्तु मेदुरोऽतिमेदाः स हिमः शीतः । केचित्तु चरकानुरोधान्मधुरः अहिमश्चेति पठन्ति ॥

कफपित्तकरा मत्स्याः परं पवननाशनाः ॥
प्रतिस्रोतोविचारित्वादाकाशप्लवनेन च ।
रोहितः प्रवरस्तेषां परं चिलिचिमोऽवरः ॥
अगोचरविचारित्वात् सर्वदोषकरो हि सः ।
कुळीरः परमं वृष्यो बृंहणः भगिनो गुरुः ॥

मत्स्याः पित्तश्लेष्मकरा वातनाशनाश्च परमत्यर्थम् । तेषां मत्स्यानां मध्ये रोहितः प्रवरः प्रतिस्रोतोविचारित्वात् । तस्य ह्येष स्वभावः, यत् प्रतिस्रोतः स्रोतस आभिमुख्येन विचरति । यया दिशा जलमेति तां दिशं यातीत्यर्थः । तथा पानीयमध्यात् स्वभावेनैवाकाशे प्लवते । अत उभयथापि क्रियायोगात् परमत्यर्थं रोहितः प्रवरः । चिलिचिमः परमत्यर्थं अवरः अश्रेष्ठः । स ह्यगोचरे दुर्विनये कर्दम-

शरदादौ यतो विदाहित्वादिदोषकरः । कूर्मोऽतः कर्म गुरुः बृंहणः शीतस्त्वः गुरुश्च । कूर्मोऽतः कर्कटः ॥

नातिशीतगुरुस्निग्धं मांसमाजमदोषलम् ।
शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ॥
विपरीतमतो ज्ञेयमाविकं बृंहणं तु तत् ।

आजं मांसं नातिशीतं नातिगुरु नातिस्निग्धं अदोषलं दोषान् न जनयति, अनभिष्यन्दि । मांसत्वात् शरीरधातुसामान्यात् बृंहणम् । एतदुक्तं शीतगुणविपरीतगुणत्वेनाविकस्य शरीरधातुसामान्येन बृंहणत्वं प्रतिपादितम् । यथा "आहारश्च शिरा यः स्यात्सोऽपि गुणः सम्" । धातुभिर्गुणो यथ ... न प्रवृद्धः" इति । अत आजमांसाद्विपरीतमाविकं मांसम् । बृंहणं तु बृंहणत्वं गत्वा बृंहणमिति विशेषः ॥

अतिमेद्यं त्यजेन्मांसं हतं व्याधिविषोदकैः ॥
स्वयं मृतं धूमपूर्णमगोचरभृतं कृशम् ।
सद्योहतं वयस्थं च शुद्धं सुरभि शस्यते ॥

सर्वं च मांसमतिमेद्यं मेदुरं त्यजेत् । व्याध्यादिभिश्च हतस्य मांसं त्यजेत् । तथा स्वयमात्मनैव मृतं धूमपूर्णं धूमेन मृतम् । तथा अगोचरभृतं अगोचरे अनभिमतं विषमे भृतं । यथा जाङ्गलानूपं भृतमानूपं च जाङ्गले । कृशं च त्यजेत् । सद्योहतं वयस्थं सम्पूर्णावस्थं शुद्धं तृणादिभिरनुपहतं सुरभि च शस्यते ॥

एणः कुरङ्गो हरिणः शशो लावः कपिञ्जलः ।
तित्तिरिः क्रकरो गोधा श्वाविड्गृध्रौ मृगाधिपः ॥
तथैव शारिका न्यङ्कुर्हंसो रोहितकच्छपौ ।
वर्मी चाग्र्याः स्ववर्गेषु प्रवरास्तेष्वपि स्मृताः ॥
लावैणगोधाः सिंहश्च—

एणादयश्च स्ववर्गेषु प्रधानाः । एणकुरङ्गहरिणशशा मृगेषु मध्ये अग्र्याः वराः । लावकपिञ्जलतित्तिरिक्रकरा विष्किरेषु । शारिका प्रतुदेषु । न्यङ्कुर्महामृगेषु । हंसो जलचारिषु । रोहितकच्छपौ वर्मी च जलजेषु । तेष्वपि प्रधानेषु मध्ये प्रवराः । एणादिष्वेणः । लावादिषु लावः । श्वाविड्गोधयोर्गोधा । गृध्रमृगाधिपयोः सिंह इति ॥

—निन्दितो गौः सदर्दुरः ।
क्रव्यः क्षाणकपोतश्च शेषमुक्तं यथायथम् ॥

गौः, दर्दुरः, क्रव्यः, क्षाणकपोतश्चैते स्ववर्गेषु निन्दिता अहिताः । शेषं च यथायथं दर्शितम् ॥

गुरूण्यण्डानि धान्यानां कणाशमधुरं परम् ।
वृद्धानां स्नायुभूयिष्ठमबल्यं गुरुदोषलम् ॥
पुंस्त्रियोः पूर्वपश्चार्धे गुरुणी गर्भिणी गुरुः ।
लघुर्योषिच्चतुष्पात्सु विहङ्गेषु पुनः पुमान् ॥
शिरःस्कन्धोरुपृष्ठस्य कट्याः सक्थ्नोश्च गौरवम् ।
तथामपक्वाशययोर्यथापूर्वं विनिर्दिशेत् ॥
शोणितप्रभृतीनां च धातूनामुत्तरोत्तरम् ।
मांसाद् गरीयो वृषणमेढ्रवृक्कयकृद्गुदम् ॥

इति मांसवर्गः ।

अण्डानि पक्षिणां गुरूणि । धान्यानां पक्षिणां यानि मांसं तत् कणाशमधुरं । वृद्धानां मांसं स्नायुबहुलत्वात् अबल्यं गुरु त्रिदोषकरं च । पुंस्त्रियोश्च यथासङ्ख्येन शरीरस्य पूर्वार्धं पश्चार्धं यथासङ्ख्येन गुरु । गर्भिणी च गरीयसी । चतुष्पात्सु मध्ये योषित् स्त्री लघुः । विहङ्गेषु पक्षिषु मध्ये पुमान् लघुः । शिरःप्रभृतीनामङ्गानां यथापूर्वं गुरुत्वं ज्ञेयम् । सक्थिमांसात् कटीमांसं गुरु । कटीमांसात् पृष्ठमांसं गुरु । एवमामाशयपक्वाशययोर्यथापूर्वं गुरुत्वम् । पक्वाशयादामाशयो गुरुस्निग्धः । रसादीनां च धातूनां यथोत्तरं गुरुत्वम् । रसाभिर्धातुभिर्यथोत्तरमेव देहस्य पाकाद्यथोत्तरमेव देहस्य गुरुत्वं स्यात् । धातूनां तथा तेन देहेन सङ्क्षेपात् यथोत्तरमेव गुरुत्वं भवति । धातुवृद्धिक्रमपरिणत्या च । उक्तं च तन्त्रे । "परस्परोपसंस्तम्भाद्धातुस्नेहपरम्परा" । अनेन किमुक्तम् । रसादीनां धातूनां परस्परोपसंस्तम्भात् अन्योन्यसंश्रयाद्धातूनां स्नेहात् कर्मक्रमपरिणतिर्यथोत्तरमेव जायते । अत्र च मांसानां धान्यभक्षणं विशेषकर्मानीतान् भिन्नयोनीनां वंशगोत्रादिभिरपि बृंहकत्वं कल्पनं च यथायोगं स्वबुद्ध्या परिकल्पनीयम् ॥ इति मांसवर्गः ॥

शाकं पाठाशटीसूपासुनिषण्णसतीनजम् ।
त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम् ॥
सुनिषण्णोऽग्निकृद्वृष्यस्तेषु राजक्षवः परम् ।

ग्रहण्यर्शोविकारघ्नो वर्चोभेदी तु वास्तुकः ॥
हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनी ।
काकमाची सरा स्वर्या चाङ्गेर्यम्लाग्निदीपनी ॥
ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः ।

शाकमुच्यते । पाठादिकं शाकं त्रिदोषनाशनं लघु संग्रहणं च । तद्वत् राजक्षवकवास्तुके । तेषु मध्ये सुनिषण्णोऽग्निकरो वृष्यश्च । सुनिषण्णो जलमध्ये भवति पत्रैश्चाङ्गेरीसदृशैः काश्मीरेषु ग्रन्थेषु चातिप्रसिद्धः । राजक्षवोऽल्पश्चैव ग्रहण्यर्शोविकारघ्नः । वास्तुकस्तु वर्चसः पुरीषस्य भेदनः । काकमाची त्रिदोषघ्नी कुष्ठनाशनी ईषदुष्णवीर्या सरा स्वरस्यसंवाहकत्वेन च रसायनसादृश्याद्रसायनी । चाङ्गेरी अम्ला अग्निदीपनी ग्रहण्यादिषु पथ्या संग्रहणी लघ्वी च । चाङ्गेरी क्षुद्राम्लिका ॥

पटोलसप्तलारिष्टशार्ङ्गेष्टावल्गुजामृताः ॥
वेत्राग्रबृहतीवासाकुतिलीतिलपर्णिकाः ।
मण्डूकपर्णीकर्कोटकारवेल्लकपर्पटाः ॥
नाडीकलायगोजिह्वावार्ताकवनतिक्तकम् ।
करीरं कुलकं नन्दी कुचेला शकुलादनी ॥
कठिल्लं केबुकं शीतं सकोशातककर्कशम् ।
तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित् ॥

पटोलादीनि कर्कशान्तानि अष्टाविंशतिः शीतवीर्याणि । रसे तिक्तानि । विपाके कटुकानि । संग्रहणानि वातकृन्ति पित्तश्लेष्मनाशनानि च । सप्तला सातला । अरिष्टो निम्बः । शार्ङ्गेष्टा अक्षारत्रक्षिका । अवल्गुजः सोमराजी । अमृता गुडूची । वेत्रो वेत्रसदृशः । मण्डूकपर्णी मण्डूकी । सवादित्यभक्ती । नाडीकलायः नाडी । तेन शकुलादकः । एते सुवर्चलाविशेषाः । गोधूमिका तु गोजिह्वा गोजी कोष्टकपूलकः । वनतिक्तको नलतण्डकः । कुलकः काकतिन्दुकः । कुचेला पाठा । शकुलादिनी कटुका । कठिल्लः वर्षाभूभेदः । कोशातकं दधित्थम् ॥
अतो निर्धारणम् ॥

हृद्यं पटोलं क्रिमिनुत् स्वादुपाकं रुचिप्रदम् ।
पित्तलं दीपनं भेदि वातघ्नं बृहतीद्वयम् ॥
वृषं तु वमिकासघ्नं रक्तपित्तहरं परम् ।
कारवेल्लं सकटुकं दीपनं कफपित्तजित् ॥
वार्ताकं कटुतिक्तोष्णं मधुरं कफवातजित् ।
सक्षारमग्निजननं हृद्यं रुच्यमपित्तलम् ॥
करीरमाध्मानकरं कषायं स्वादुतिक्तकम् ।
कोशातकावल्गुजकौ भेदिनावग्निदीपनौ ॥
श्यामाशाल्मलिकाम्पयभञ्जीकर्णकयूथिकाः ।
वृक्षादिनीक्षीरवृक्षाविम्बीतनिकवृक्षकाः ॥
लोध्रः शणः कच्छुदारः सशेलुर्धपमुष्टिका ।
भल्लातकः कोविदारः कमलोत्पलकिंशुकम् ॥
पटोलादिगुणं स्वादु कषायं पित्तजित् परम् ।

पटोलं हृद्यं क्रिमिनाशनं मधुरविपाकं रुचिकरं च । बृहती क्षुद्रबृहती च पित्तकरमग्निदीपनं शकृदादीनां च भेदनं वातनाशनं च । वृषं छर्दिकासौ नाशयत्यत्यर्थं च रक्तपित्तं नाशयति । कारवेल्लं रसे किञ्चित् कटुकत्वेन युक्तं अग्निदीप्तिकरं पित्तश्लेष्मनाशनं च । वार्ताकं रसे कटुतिक्तं मधुरमुष्णवीर्यं च वातश्लेष्महरं किञ्चित्क्षारत्वयुक्तं अग्निदीप्तिकरं हृद्यं रुचिकरं न च पित्तं करोति । यथा वातश्लेष्मघ्नं न तथा पित्तकरमित्यर्थः । करीरमाध्मानकरं रसे कषायमधुरं तिक्तं च । कोशातकावल्गुजकौ भेदिनौ वह्निदीपनौ च । श्यामादि किंशुकान्तं पटोलादिगुणयुक्तं रसे मधुरकषायं परमत्यर्थेन पित्तजित् । श्यामा त्रिवृत् । भञ्जी भार्गी । वृक्षादनी वन्दाकः । क्षीरवृक्षः पीतकः । स एव कशेरुकः । बिम्बी रक्तफला । शेलुः श्लेष्मातकः । विषमुष्टिका । किंशुकः पलाशः । तस्य कुसुमं एव शाकत्वम् ।

बद्धमूत्रा सरा भञ्जी करीरं स्याद्भीरुजम् ॥
सतिक्तं लघु चक्षुष्यं वृष्यं दोषत्रयमणुल् ।
तण्डुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः ॥
मदपित्तविषास्रघ्नो मुञ्जातं वातपित्तजित् ।
स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्रकृत् परम् ॥
पालक्या पिच्छिला गुर्वी श्लेष्मला भेदिनी हिमा
मदघ्न्युपोदका चुचुश्चाङ्गी तौ पूर्ववत्तथा ॥
विदारी वातपित्तघ्नी मूत्रला स्वादुशीतला ।
जीवनी बृंहणी कण्ठ्या गुर्वी वृष्या रसायनी ॥

चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा ।
शाकानां प्रवरा न्यूना द्वितीया किंचिदेव तु ॥
वातपित्तहरा भण्डी पर्वणी पर्वपुष्पिका ।

भण्डी बद्धवर्चा सरा च । अभीरुत्र करीर शतावर्यङ्कुरं तत् तिक्तं लघु चक्षुष्यं वृष्यं त्रिदोषनाशनं च । इदमन्यत् करीरम् । तण्डुलीयः शीतवीर्यो रूक्षो मधुरविपाकरसो लघुः मदादिनाशनश्च । मूलकं वातपित्तनाशनं विषघ्नादिगुणयुक्तं अल्पश्लेष्मकरं च । मूलकः काश्मीरेषु महायकः । पालङ्क्या विषघ्नादिगुणपालङ्क्यगुणा । उपोदका मदनाशिनी । उपोदकामत्स्याक्षीचञ्चूपालङ्क्यास्तण्डुलीयसदृशगुणाः गुरु-सङ्ग्रहणः तां सूपोदकाख्य पृथक् पालङ्क्यागुणाविन्यर्थः । तथेति समुच्चये । विदारी वातपित्तनाशिनी मूत्रला मधुरा शीतवीर्या च । विदारी सुगालक्कः । जीवन्तीशाकं जीवनत्वादिगुणयुक्तम् । या जीवन्ती मधुरा सा प्रतिपीया एवगुणा शाकानां च श्रेष्ठा । द्वितीया मधुरा न एभिरेव गुणैः किंचिन्न्यूना भवति । भण्ड्यादित्रयं वातपित्तहरम् । भण्डी मञ्जिष्ठा । पर्वपुष्पी नागदन्ती ॥

कूष्माण्डतुम्बकालिङ्गकर्कार्वेर्वारुतिण्डिशम् ॥
तथा त्रपुसचीनाकचिर्भिटं कफवातकृत् ।
भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरसं गुरु ॥

कूष्माण्डादिकं वातश्लेष्मकरं, भेदनं, विष्टम्भकरमभिष्यन्दि, शीतं, स्वादु, मधुररसविपाकं, गुरु च । उर्वारुः कर्कटिका ॥

एतेषां निर्धारयति

वल्लीफलानां प्रवरं कूष्माण्डं वातपित्तजित् ।
बस्तिशुद्धिकरं वृष्यं त्रपुसं त्वतिमूत्रलम् ॥
तुम्बं रूक्षतरं ग्राहि कालिङ्गैर्वारुचिर्भिटम् ।
बाले पित्तहरं शीतं विद्यात् पक्वमतोऽन्यथा ॥

सर्वेषां वल्लीफलानां कूष्माण्डं प्रशस्तम् । वातपित्तनाशनं बस्तिशोधनं वृष्यं च । त्रपुसं पुनरतिमूत्रलम् । तुम्बमलाबु अत्यर्थं रूक्षं सङ्ग्रहणं च । कालिङ्गैर्वारुचिर्भिटं च बाल्यमपूर्णरसादि पित्तहरं शीतवीर्यं च । पक्वमतो बाल्याद्विपरीतम् ॥

शीर्णवृन्तं तु सक्षारं पित्तलं कफवातजित् ।
रोचनं दीपनं हृद्यमष्ठीलानाहनुल्लघु ॥

शीर्णवृन्तं शीर्णं वृन्तं वल्लीसम्बन्धस्थाने शुष्कं यस्य, यत् पाकमतिक्रम्य वर्तते तदीषत्क्षारं, पित्तकरं, वातश्लेष्मनाशनं, रुचिकरं, हृद्यं, अष्ठीलां आनाहं च नाशयति, लघु च । अष्ठीला वक्ष्यमाणलक्षणा ॥

मृणालबिसशालूकशृङ्गाटककशेरुकाः ।
नन्दीमाषककेलूटक्रौञ्चादनकलोड्यकम् ॥
सतरूटं कदम्बं च रूक्षं ग्राहि हिमं गुरु ।

मृणालादिकं रूक्षं सङ्ग्रहणं, शीतवीर्यं, गुरु च । मृणालं बिसाङ्कुरम् । शालूकं पद्मकन्दम् । कशेरुकं प्रसिद्धं मध्यदेशे । क्रौञ्चादनं काश्मीरेषु केम्बुकमन्यच्च कलाविषम् । अङ्कोल्लं हस्ताङ्कुलपत्रम् । पद्मबीजमन्ये । कदम्बः कन्दविशेषः ॥

कलम्बुनालिकामार्षकुठिञ्जरकुतुम्बकम् ॥
चिल्लीलट्वाकनिष्पावकुरुटकगवेधुकाः ।
यातुका सालकल्याणी श्रीपर्णी पीलुपर्णिका ॥
कुमारी जीवलोणीकायवशाकसुवर्चलाः ।
कुसुमाण्डनीलिनी स्वर्वा ह्यकधूमकलक्ष्मणा ॥
आरूपाणि च सर्वाणि तथा सूप्यानि लक्ष्मणा
जीवन्तिकश्वघपर्णीमपुन्नाटकुवेरकम् ॥
स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु ।
शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति ॥
स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषलम् ।

कलम्ब्वादिकं मधुरं, ईषल्लवणं, रूक्षं, वातश्लेष्मकरं, गुरु, शीतवीर्यं, मूत्रं पुरीषं च सृजति बहिःक्षिपति, विष्टम्भकरमिन् जठरप्रदेशे पिण्डीभूय जरां यातीति । प्रायोग्रहणं एतेषां मध्ये केचिदेवंस्वरूपा इति ज्ञापनार्थम् । तेषां च पर्याया निघण्टुज्ञानात् देशभाषासरकरणाच्च किञ्चिन् ज्ञायन्ते । किंचित् उच्यन्ते । कलम्बुः कालिका । नालिका कपोतचरणा । मार्ष गान्धारे । कुठिञ्जरं काश्मीरेषु शिलः । चिल्ली तण्डुलीयकविशेषः । लट्वाको गुग्गुलुः । निष्पावो राजशिम्बी । पीलुपर्णिका मूर्वा । लोणिका काश्मीरेषु

लोनारा । यवशाकः क्षारपत्रकम् । कारमीरेषु कोणीकः । आलूपानि बहुविधानि देशेप्रसिद्धानि । तानि सर्वाणीह गृह्यन्ते । सूप्यानि मुद्गादिमत्स्यपर्णानि । लक्ष्मणा मधुयष्टी। जीवन्तो रक्तनाळो वास्तुकः । प्रपुन्नाटः चक्रमर्दकः। कुबेरकः कठिञ्जरभेदः । कोमीरेति केचित् । एतच्च सर्वं स्विन्नं, निष्पीडितरसं, अतिशयेन बहुस्नेहं च नात्यपथ्यम् ॥

लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता
तर्कारीवरणं स्वादु सतिक्तं कफवातजित् ।
वर्षाभ्वौ कालशाकं च सक्षारं कटु तिक्तकम्
दीपनं भेदनं हन्ति गरशोफकफानिलान् ।
दीपनाः कफवातघ्नाश्चिरिबिल्वाङ्कुराः सराः ॥

सूक्ष्मपत्रा जालीव या चिल्ली सा वास्तुकसमानगुणा। तर्कारी वरणं च मधुरतिक्तं, वातश्लेष्मनाशनं च । वर्षाभ्वौ पुनर्नवे कालशाकं च ईषत् क्षारं, रसे च कटुकतिक्तं, अग्निदीपनं, भेदनं गरादींश्च नाशयति । तर्कारी अग्निमन्थः । चिरिबिल्वाङ्कुराः अग्निदीपनाः, वातश्लेष्मनाशनाः, सराश्च ॥

लघुरुष्णा सरा तिक्ता सोरुपूका च लाङ्गली।

उरुपूकं लाङ्गली च लघुनी, उष्णवीर्ये, सरे, तिक्ते च । उरुपूकं रक्तैरण्डः । लाङ्गली इन्द्रपुष्पिका ॥

वातलौ कटुतिक्ताम्लौ भेदिनौ तिलवेतसौ ॥
तद्वत् पञ्चाङ्गुलो वंशकरीरास्तु विदाहिनः ।
वातपित्तकरा रूक्षाः कटुपाकाः कफापहाः ॥

तिलवेतसपत्रे वातले, रसे कटुतिक्ताम्ले, भेदने च । तद्वत् तिलवेतसगुणः पञ्चाङ्गुलः शुक्लैरण्डः । तस्य पत्रं शाकत्वम् । वंशकरीराः वंशाङ्कुराः, विदाहिनः, वातपित्तकराः, रूक्षाः, विपाके कटुकाः, कफनाशनाश्च ॥

बिल्वरास्नाबलाशाकं वातघ्नमतिसारजित् ।
वायुं वत्सादनी हन्यात् कफं गण्डीरचित्रकौ ॥
पत्तूरो दीपनस्तिक्तः प्लीहार्शःकफवातजित् ।

बिल्वादिशाकत्रयं वातनाशनं, अतीसारनाशनं च । वत्सादनी वायुं नाशयति । वत्सादनी कर्कशकः । गण्डीरचित्रकशाकौ कफं नाशयतः । पत्तूरो दीपनादिगुणयुक्तः । "मत्स्याक्षकस्तु पत्तूरः पत्रजः प्रिय इत्यपि" ॥

क्रिमिकासकफोत्क्लेदान् कासमर्दो जयेत् सरः
रूक्षोष्णमम्लं कौसुम्भं गुरु पित्तकरं सरम् ।
सक्षारं मधुरं स्निग्धमुष्णं गुरु च सार्षपम् ॥
शाकानामवरं बद्धविण्मूत्रं सर्वदोषकृत् ।

कासमर्दकः सरः, क्रिम्यादींश्च नाशयति । उत्क्लेदः स्रोतसो मालिन्येनार्द्रत्वम् । कुसुम्भशाकं रूक्षं, उष्णवीर्यं, गुरु, पित्तकरं, सरं च । सार्षपं शाकं ईषत्क्षारगुणयुक्तं, मधुरत्वादिगुणं, शाकानां च अवरं अश्रेष्ठं, मूत्रं विशं च बध्नाति, त्रिदोषकरं च ॥

यद्बालमव्यक्तरसं किंचित्क्षारं सतिक्तकम्॥
तन्मूलकं दोषहरं लघु सोष्णं नियच्छति ।
गुल्मकासक्षयश्वासव्रणनेत्रगलामयान् ॥
स्वराग्निसादोदावर्तपीनसांश्च—

बालं सूक्ष्मं मूलकं त्रिदोषनाशनं, लघु, किंचिदुष्णवीर्यं, गुल्मादींश्च नाशयति । कीदृग्बालमित्युक्तं अत आह । यत् बालं अव्यक्तरसं अस्फुटमाधुर्यादि, ईषत् क्षारं क्षारं जिह्वादिशैत्यकृत्, किंचिद्व्यक्ततिक्तत्वं च । एवंविधं सूक्ष्मं मूलकमेवगुणयुक्तम् । अयं जातिविशेषः । तथा च बालमूलकस्य कन्दमूलकबीजदेशकालसंस्थानपरिणतिविशेषाद्भिन्नजातीयत्वं प्रसिद्धमेव काश्मीरेषु ॥

—महत् पुनः ।
गुरूष्णकटुकं स्वादुविपाकं सर्वदोषकृत् ॥
गुर्वभिष्यन्दि च स्निग्धासिद्धं तदपि वातजित्
वातश्लेष्महरं शुष्कं सर्वमामं तु दोषळम् ॥

महत् पुनः स्थूलं, मूलकं, गुरूष्णवीर्यं, रसे कटुकं, विपाके मधुरं, त्रिदोषकरं च । तदेवगुणयुक्तमपि घृतमांसादिना सिद्धं गुर्वभिष्यन्दि, वातजिच्च । शुष्कं च महदपि मूलकं वातश्लेष्महरम् । सर्वं च मूलकं बालं महच्च शुष्कमार्द्रं चाममनग्निपक्वं सदोषकृद्दोषहरस्याप्यपक्वत्वात् । दोषबलत्वादीनामुत्क्लेशमात्रपरिणामकरं च । अग्निसिद्धं तु यथास्वरूपगुणम् ॥

कटूष्णो वातकफहा पिण्डालुः पित्तवर्धनः ।

पिण्डालु रसे कटुकः, वीर्ये उष्णः, वातश्लेष्मनाशनः, पित्तवर्धनश्च ॥

कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणाः ॥
धान्यतुम्बुरुशैलेययवानीशृङ्गवेरकाः ।
पर्णासो गृञ्जनोऽजाजी जीरकं गजपिप्पली ॥
फणिज्झार्जकजम्बीरखराह्वाकालमालिकाः ।
दीप्यकः क्षवकद्वीपिवस्तगन्धादि यद्धरित् ॥
रसे पाके च कटुकं दोषोत्क्लेशकरं लघु ।
विदाहि रूक्षतीक्ष्णोष्णं दृक्शुक्रक्रिमिनाशनम्
वर्गो हरितकाख्योऽयमुपदंशेषु युज्यते ।
वासनो व्यञ्जनानां च हृद्यो दीपनरोचनः ॥

कुठेरादिकं यल्लघुशाकं हरितं पर्णाख्योपादानं तत् वर्गे एवोच्यते । आदिग्रहणादन्येषामपि रसादिगुणसाम्येन तद्वर्गता ग्रहणम् । अस्य चाऽविशेषतयोपयोगे गुणविशेषमाह— अतः । कुठेरादिकं हरितकं नित्यं पुरीष वर्धयति मलवर्धनं रसे विपाके च कटुकम् । दोषान् वातादीनुत्क्लेशयति, यत् किञ्चित् कोपयत् स्थानाच्च्यावयति तदुत्क्लेशकरम् । लघु, विदाहि, रूक्षं, उष्णवीर्यं, तीक्ष्णं, दृगादिनाशनं च । अयं च कुठेरादिको हरितकाख्यो वर्ग उपदंशेषु युज्यते । उपदंशो येन सहान्नं भोक्तुं युज्यते । व्यञ्जनानां च नानाविधानां भक्ष्यभोज्यादीनां वासनः सौगन्ध्यादिकरः, हृद्योऽग्निदीपनो, रोचनश्च । कुठेरकः वैकृष्टकः । शिग्रुः शोभाञ्जनम् । सुरसः कृष्णतुलसी । आसुरी राजिका । फणिज्झकः फणी । अर्जकः श्वेतपर्णासः । जम्बीरः सुरभिः । कासमर्दशु तुम्बुरु । खराह्वा हस्तिमयूरकः । कालमालः कृष्णकुठेरकम् । दीप्यकः अजमोदः ॥

हिध्माकासविषश्वासपार्श्वरुक्पूतिगन्धहा ।
सुरसः सुमुखः शोफगन्धहा धानका पुनः ॥
कषायतिक्तमधुरा मूत्रला न च पित्तकृत् ।
खराह्वा बस्तिशूलघ्नी चित्रको दीपनः परम्॥

सुरसस्तु हिध्मादीन्नाशयति । सुमुखः श्वयथुदुर्गन्धौ नाशयति । धानका रसे कषायतिक्तमधुरा, मूत्रकारी, पित्तं च न करोति । खराह्वा बस्तिशूलं नाशयति । चित्रकोऽर्शोदीपनः ॥

पत्रे सक्षारमधुरो मध्ये मधुरपिच्छिलः ।
तीक्ष्णोष्णो लशुनः कन्दे कटुपाकरसः सरः
हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः
भग्नसन्धानकृत् बल्यो रक्तपित्तप्रदूषणः ॥
किलासकुष्ठगुल्मार्शोमेहक्रिमिकफानिलान् ।
सहिध्मापीनसश्वासकासान् हन्ति रसायनम्॥

लशुनः पत्रे ईषत् क्षारो, मधुरश्च । मध्ये नाडीभागे मधुरसः, पिच्छिलश्च । कन्दे मूले तीक्ष्णोष्णवीर्यो, रसे विपाके च कटुकः, सरः, हृद्यः, केशस्यापि हितः, वृष्यः, किलासादींश्च नाशयति । हिध्मादींश्च । रसायनमिव रसायनं देहहितम् ॥

पलाण्डुस्तद्गुणैर्न्यूनो विपाके मधुरस्तु सः ।
कफं करोति नो पित्तं केवलानिलनाशनः ॥

पलाण्डुर्लशुनोक्तैर्गुणैर्न्यूनः हीनः । विपाके तु मधुरः कफं करोति पित्तं न करोतीति वाक्यार्थः । न करोति पित्तं न विनाशयतीति तात्पर्यार्थः । वातं च केवलमन्यदोषासम्पृक्तं नाशयति ॥

दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः ।
विशेषादर्शसां पथ्यो भूकन्दस्त्वतिदोषलः ॥

सूरणोऽग्निदीप्तिरुचिकरः, श्लेष्मनाशनो विशदो लघुः, अर्शसां अतिपथ्यश्च । भूकन्दोऽत्यर्थं त्रिदोषकरः । स च प्रसिद्धः ॥

पत्रे पुष्पे फले नाले कन्दे च गुरुता क्रमात् ।
वरा शाकेषु जीवन्ती सार्षपास्त्ववराः परम्॥

## इति शाकवर्गः

पत्रादीनां च शाकहरितकशाकक्रमात् यथोत्तरं गुरुत्वम् । पत्रशाकं तावत् अल्पमन्येभ्यश्च गुरु, ततः पुष्पशाकं, ततः फलशाकं, ततो नालशाकं, ततश्च कन्दशाकं, इत्येवं हरितकेषु गुरुत्वं विज्ञेयम् । अत्राप्युक्तवर्गोपादानादौ पत्रदृक्काचनादिकं चिन्त्यम् । अत्र शाकानां हरितकानां च येषां नामानि नोक्तानि तेषां देशभाषादिनिर्देशोऽधिगम्याः पञ्चमरकारादृष्टयोगविशेषाश्च ज्ञातव्यानि । अन्यत्सुबोधम्॥

इति शाकवर्गः ॥

द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट्।
स्वादुपाकरसा स्निग्धा सकषाया हिमा गुरुः
निहन्त्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान्।
तृष्णाकासज्वरश्वासस्वरभेदक्षतक्षयान् ॥
उद्रिक्तपित्तान् जयति त्रिदोषान् स्वादु डाडिमम्
पित्ताविरोधि नात्युष्णमम्लं वातकफापहम् ॥

फलान्युच्यन्ते । तेषां च द्राक्षा श्रेष्ठा । अतः सै. वादौ गृह्यते । द्राक्षा सर्वफलानामुत्तमा, वृष्यत्वादिगुणयुक्ता, लघुः, अनिलपित्तादींश्च नाशयति । सकषाया मा धुर्यात्स्वल्प कषायत्व तत्रास्तीत्यर्थः। स्वादु मधुरं डाडिमंमधिकपित्तं सन्निपात नाशयति । अम्ल डाडिम न पित्ते विरुद्धं, नाति चोष्णवीर्यं, वातश्लेष्मनाशन च ॥

सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम् ।

सर्वं डाडिमम्। मधुरमम्ल मधुराम्ल च हृद्यत्वादिगुणयुक्तम् ॥

मोचखर्जूरपनसनालिकेरपरूपकम् ॥
आम्राततालकाश्मर्यराजादनमधूकजम् ।
सौवीरबदराङ्कोलफल्गुश्लेष्मातकोद्भवम् ॥
वातामाभिषुकाक्षोलमुकूलकनिकोचकम् ।
ऊरुमाणं प्रियालं च बृंहणं गुरु शीतलम् ॥
दाहक्षतक्षयहरं रक्तपित्तप्रसादनम् ।
स्वादुपाकरसं स्निग्धं विष्टम्भि कफशुक्रकृत् ॥

मोचादि प्रियालान्तं बृंहणत्वादिगुणयुक्तम् । मोच कदलीफलं । आम्रातक पीतनकम् । राजादन वानरप्रियम्। सौवीरं कर्कन्धुबदरम्। क्षतः उरःक्षतः। क्षयो धातुक्षयः ॥

नालिकेरं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम् ।
बलमांसकरं हृद्यं बृंहणं वस्तिशोधनम् ॥
मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम् ।
रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु ॥
स्निग्धं स्वादु कषायं च राजादनफलं गुरु ।

सुबोधम् ।

फलं तु पित्तलं तालं सरं काश्मर्यजं हिमम् ॥
शकृन्मूत्रविबन्धघ्नं केश्यं मेध्यं रसायनम् ।
मधूकजमहृद्यं तु बदरं सरणात्मकम् ॥
वातामाद्युष्णवीर्यं तु कफपित्तकरं सरम् ।
परं वातहरं स्निग्धमनुष्णं तु प्रियालजम् ॥
प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ।
कोलमज्जा गुणैस्तद्वत्तृड्छर्दिःकासजिच्च सः ॥

तालं फलं पित्तलं सर च । काश्मर्यजं हिमादिगुणम् । मधूकफलमहृद्यम् । बदरं सरणशीलम् । वातामादीनां गुणविशेषप्रदर्शनपरं निर्द्धारणम् । वातामादिकं पित्तश्लेष्मकरमत्यर्थमुष्णं च वातहर स्निग्धं च । प्रियालफलस्य शीतवीर्यत्वापवादोष्णत्वशङ्कायामिदमुच्यते। अनुष्णमिति। प्रियालमज्जा प्रियालबीजः । स च मधुरत्वादिगुणयुक्तः । बदरमज्जा गुणैस्तद्वत् प्रियालमज्जवत् । बदरस्य तु विशेषः तृडादिनाशकत्वम् ॥

तिन्दुकाश्मन्तकासीनफलिनीबिम्बितोद्भवम् ।
टङ्काश्वकर्णबकुलगाङ्गेरुधवधन्वनम् ॥
श्वेतपाककपित्थानि शिश्वतीभव्यजाम्बवम् ।
क्षीरिवृक्षभवं बीजं पौष्करं कफपित्तजित् ॥
कषायमधुरं रूक्षं शीतलं गुरु लेखनम् ।
विबन्धाध्मानजननं स्तम्भनं वातकोपनम् ॥

तिन्दुकादि पुष्करबीजान्तं कफपित्तजित्त्वादिगुणयुक्तम्। शिश्वती काश्मीरेषु वृक्षबदरी । सा च मधुरा । पुष्करबीजस्यानभिषक्तस्योपयोगे फलगुणत्वम् । क्षीरिवृक्षा ये शाखादिक्षताः क्षीर स्रवन्ति । विबन्धः स्रोतोभिर्दोषादीनामकृ हननम् ॥

कपित्थमामं कण्ठघ्नं कषायाम्लं त्रिदोषकृत् ।
पक्वं रुच्यं कषायाम्लं स्वादु हिध्माविषघ्नकृत्॥
दोषघ्नं षाडवारिष्टरागयुक्तिषु पूजितम्।
विषघ्नमुभयं ग्राहि कपित्थान्येवमादिशेत् ॥

कपित्थमाममपक्वं स्वरनाशनं, रसे कषायाम्लं, त्रिदोषकर च । पक्व रुचिकर, रसे च कषायाम्लं, मधुरं, हिध्माच्छर्दिनाशनं, विदोषघ्नं, षाडवादियोजनासु च पूजितम । उभयमाम पक्वं च विषनाशनं, संग्रहणं च । एवं कपित्थान्यपरादिशेत् । रसविशेषेण नानाविधानि कपित्थानि

सम्भवन्ति । तान्यनया दिशा कल्पयेदित्यर्थः । तेन कषायाम्ल सदवामकपित्थगुणं, माधुर्यानुविद्धं तथैव पक्वगुणमिति॥

बृंहणं वातपित्तघ्नं स्निग्धं सिञ्चतिकाफलम् ।
भव्यं विशदमम्लं च जाम्बवं त्वतिवातलम् ॥
विष्टम्भकृद् कण्ठ्यं च साम्लं तु क्षीरिवृक्षजम् ।
पित्तश्लेष्मघ्नमम्लं च वातलं चाक्षकीफलम् ॥
बालं कषायकट्वम्लं रूक्षं वातास्रपित्तकृत् ।
संपूर्णमाम्रमम्लं तु रक्तपित्तकफमदम् ॥
स्वादु साम्लं गुरुस्निग्धं मारुतघ्नमपित्तलम् ।
हृद्यं पर्यागतं श्लेष्ममांसशुक्रबलप्रदम् ॥
सहकाररसो हृद्यः सुरभिस्निग्धरोचनः ।
दीपनः पित्तवातघ्नः शुक्रशोणितशुद्धिकृत् ॥

सिञ्चतिकाफलं बृंहणत्वादिगुणयुतम् । भव्यमम्लं सविशदं च जाम्बवमतिवातकरं, विष्टम्भकरं, स्वर्यं च । क्षीरिवृक्षफलं साम्लं ईषदम्लम् । अक्षकीफलं पित्तश्लेष्मनाशनं, अम्लरसं, वातलं च । आम्रं चूतं बालमसंपूर्णस्वरूपं रसे कषायकट्वम्लं, रूक्षं, वातास्रपित्तकरं च । पर्यागतमतिक्रान्तपाकं स्वादु साम्लं मधुराम्लरसं, गुरु, स्निग्धं, वातं नाशयति, पित्तं च न करोति, हृद्यं, श्लेष्मादिकरं च । सहकाराख्यादस्मादाम्रादेव निष्कास्यते । अतोऽत्रोच्यते । सहकाररसो हृद्यत्वादिगुणयुतः ॥

कषायं रोचनं हृद्यं वातलं लवलीफलम् ।
गुर्वग्निसादकृद्बिल्वं दोषलं पूतिमारुतम् ॥
पक्वं बालं पुनस्तीक्ष्णं पित्तलं लघु दीपनम् ।
वातश्लेष्मघ्नमुष्णं च स्निग्धं ग्राह्युभयं परम् ॥
वृक्षाम्लं ग्राहि रूक्षोष्णं लघु दीपनरोचनम् ।
वातश्लेष्महरं किञ्चिदूनं कोशाम्लजं ततः ॥
फलं करञ्जं विष्टम्भि पित्तश्लेष्माविरोधि च ।
गुरूष्णमधुरं रूक्षं केशघ्नं च शमीफलम् ॥

लवलीफलं कषायरसं रोचनत्वादिगुणयुतम् । बिल्वं गुरु अग्निसादकरं, त्रिदोषकरं, पूतिमारुतं च । पूतिगुणं दुर्गन्धकरं च मारुतमुद्गारादौ करोतीत्येवंगुणं पक्वं बिल्वम् । बालं पुनरपक्वं तीक्ष्णत्वादिगुणयुतम् । उभयं बालं पक्वं च स्निग्धं परमत्यर्थं च संग्रहणम् । वृक्षाम्लं तिन्तिणीकं संग्रहणत्वादिगुणयुतम् । कोशाम्रजं फलं तथा वृक्षाम्लगुणैः किञ्चिदूनम् । करञ्जफलं विष्टम्भि, पित्तश्लेष्मणि च न विरुद्धम् । शमीफलं मधुरं, रूक्षं, केशघ्नं, गुरूष्णवीर्यं च ॥

कटुपाकरसं पीलु तीक्ष्णोष्णं भेदि पित्तलम् ।
क्रिमिगुल्मोदरगरप्लीहार्शःकफवातजित् ॥
सतिक्तं स्वादु यत् पीलु नात्युष्णं तत्त्रिदोषजित् ।
नीपं शताह्विकं प्राचीनामलकं तृणशूल्यजम् ॥
अस्मादल्पान्तरगुणमङ्कोटं सविकङ्कतम् ।
त्वक्तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित् ।
बृंहणं मधुरं मांसं वातपित्तहरं गुरु ।
लघु तत्केसरं कासश्वासहिध्मामदात्ययान् ॥
आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान् ।
गुल्मोदरार्शःशूलानि मन्दाग्नित्वं च नाशयेत्

पीलुफलं पाके रसे च कटुकं, तीक्ष्णत्वादिगुणयुक्तं, क्रिम्यादींश्च नाशयति । मधुरमीषत्तिक्तं च जात्या यत् पीलु, तत् नात्युष्णवीर्यं, त्रिदोषघ्नं च । नीपादिविकङ्कतान्तं फलमस्मात् सतिक्तस्वादुपीलुनोऽल्पान्तरगुणं स्तोकगुणमित्यर्थः । नीपो धूलिकदम्बः प्राचीनामलकमामलकसदृशं कृष्णलोहितम् । मातुलुङ्गफलस्य त्वक् रसे तिक्तकटुका, स्निग्धा, वातनाशिनी च । मांसं त्वचोऽन्तः बृंहणं, मधुरं, वातपित्तहरं, गुरु च । तस्य मातुलुङ्गस्य केसरमन्तर्मांसभवं लघु कासादींश्च नाशयति ॥

भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम् ।
तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ॥
स्वाद्वम्लं शीतमुष्णं च द्विधा पारावतं गुरु ।
रुच्यमत्यग्निशमनं रुच्यं मधुरमारुकम् ।
पक्वमाशु जरां याति नात्युष्णं गुरु दोषलम् ।
द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदम् ॥
गुरूष्णवीर्यं वातघ्नं सरं सकरमर्दकम् ।
तथाम्लं कोलकर्कन्धुलिकुचाम्रातकारुकम् ॥
ऐरावतं दन्तशठं सतूदं मृगलिण्डिकम् ।
नातिपित्तकरं पक्वं शुष्कं च करमर्दकम् ॥

दीपनं भेदनं शुष्कमम्लिकाक्षोलयोः फलम् ।
तृष्णाश्रमक्लमच्छेदि लघ्विष्टं कफवातयोः ॥

भल्लातकस्य त्वक्, मांसं च बृंहणत्वादिगुणयुक्तम् । तस्य चास्थि तैक्ष्ण्येनाग्निसमं, मेधायै हितमत्यर्थं वातश्लेष्महरम्। पारावतं द्विधा द्विप्रकारं मधुरमम्लं च । यथासंख्येन मधुरं शीतवीर्यं, अम्लं उष्णवीर्यम् । उभयमपि गुरु, रुचिकरं, अत्यग्निशमनं च । मधुरपारुषकं रुचिकरम् । पक्वं च सत् सुजरं, किंचिदुष्णवीर्यं, किंचिद्गुरु, किंचिद्दोषघ्नं च । दोषघ्नं अरुक्षम् । "आरुकं वीरसेनं च यो राचीनारुकं तथा। विद्याज्जातिविशेषेण तच्चतुर्विधमारुकम्"। द्राक्षापरूषकं चार्द्रमशुष्कं करमर्दकं चाम्लं सत् पित्तश्लेष्मकरं, गुरुत्वादिगुणयुक्तं च । करमर्दकं सुषेणम् । कोलादिकं मृगलिण्डिकान्तं अम्लं सत् तथेत्यम्लद्राक्षादिवदित्यर्थः । ऐरावत नागरङ्गं, दन्तशठं जम्बीरं, कर्कन्धूर्हस्वबदरी । करमर्दकं पक्वं शुष्कं च नात्यर्थं पित्तकरम् । अम्लिकाफलं अक्षोलफलं च शुष्कं दीपनं, भेदनं, तृष्णादिनाशनं, कफवातयोश्च पथ्यम् ॥

फलानामवरं तत्र लिकुचं सर्वदोषकृत् ।
हिमानिलोष्णदुर्वातव्यालालादिदूषितम् ॥
जन्तुजुष्टं जले मग्नमभूमिजमनार्तवम् ।
अन्यधान्ययुतं हीनवीर्यं जीर्णतयाति च ॥
धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलम् ।
असंजातरसं तद्वच्छुष्कं चान्यत्र मूलकात् ॥
प्रायेण फलमप्येवं तथामं बिल्ववर्जितम् ।

इति फलवर्गः ॥

सर्वेषां च फलानामवरमप्रधानं लिकुचं त्रिदोषकरं च । इत्थमस्वरूपविज्ञाननिष्पत्तौ धान्यादिकमपथ्यं समादृत्य हिमानिलोत्पादिनोष्णेन । एवंविधं धान्यं त्यजेत् । हिमादिदूषितं अनिलेनातिरूक्षेण केदारस्थं दूषितमुष्णेन वातादिना दुर्वातेन च पुरोवातादिना । तथा व्यालानां सर्पादीनां लालया दूषितम् । आदिग्रहणेन मूत्रपुरीषादीनां ग्रहणम् । तथा जन्तुभिः कीटादिभिर्जुष्टं सेवितं जले मग्नमाप्लुतम् । अभूमौ विपरीतभूमौ जातमभूमिजम् । या यस्य धान्यस्योचिता भूमिः ततोऽन्या विपरीता । तथानार्तवमकालसमुद्भवम् । ऋतुर्यस्य धान्यस्योत्पत्तिः प्रसिद्धा ततोऽन्यस्मिन्नुत्पादितमित्यर्थः । तल्लक्षणं च रसादीनामपरिपूर्णत्वेन विज्ञेयम् । अन्येन च विजातीयेन धान्येन संयुक्तं केदारे जातम् । अतिजीर्णतया अतिपुराणत्वेन च हीनवीर्यं नष्टशक्ति । एवंविधं धान्यं त्यजेत् । तथा शाकमपि त्यजेत् । कीदृशं रूक्षसिद्धं रूक्षमेव सिद्धं रूक्षसिद्धं निःस्नेहसिद्धमित्यर्थः । अथवा रूक्षेण काञ्जिकादिना सिद्धं रूक्षसिद्धम् । अकोमलं कठिनम् । स्वभावतः संस्कारतो वा । असंजातरसमपरिपूर्णस्वरूपमित्यर्थः । तथा सर्वं शाकं शुष्कं त्यजेत् । मूलकं वर्जयित्वा । प्रायेण बाहुल्येन फलमप्येवंविधं त्यजेत् । द्राक्षादेश्च शुष्कस्यापि प्रयोगो दृश्यत इति ज्ञापनार्थं प्रायोग्रहणम् । तथा फलं सर्वमाममप्राप्तपाकं त्यजेत् । बिल्वं तु वर्जयित्वा । तस्यामस्यापि प्रयोगः । अत्र यथायोगं पूर्ववद्योज्यम् । अत्रापि फलानामप्रसिद्धानां प्रसिद्धानां च येषां नामानि नोक्तानि तानि नानादेशकुलेभ्योऽपभ्रंशसंस्कारादिनाधिगन्तव्यानि ॥

इति फलवर्गः ॥

शूकशिम्बिजपक्वान्नमांसशाकफलाश्रयैः ।
वर्गैरन्नैकदेशोऽयं भूयिष्ठमुपयोगवान् ॥
निर्दिष्टो रसवीर्याद्यैर्यथास्वं कर्मसाधने ।
न शक्यं विस्तरेणापि वक्तुं सर्वं तु सर्वथा ॥
हिताहितत्वेऽप्येकान्तनियमोऽस्मादनिश्चितः ।
मात्रायोगक्रियादेशकालावस्थादिभेदतः ॥
ततस्ततो यतो दृष्टास्ते ते भावास्तथा तथा ।

शूकधान्यादीनामाश्रयैः षड्भिर्वर्गैरयमन्नस्याहारस्यैकदेशः स्तोकमात्रं निर्दिष्ट इति सम्बन्धः । किंभूतोऽन्नैकदेशः? भूयिष्ठं प्राचुर्येणोपयोगो यस्यास्ति । कथं निर्दिष्टः? रसवीर्यविपाकप्रभावसंस्कारादिभिः । यथास्वं कर्मसाधने यथास्वकार्यकर्तृत्वे । एकदेशः किमर्थमुक्त इत्यत आह न शक्यमित्यादि । सर्वं वस्तुजातं सर्वथा सर्वेण प्रकारेणापि वक्तुं न शक्यम् । महतापि ग्रन्थगौरवेण न शक्यं, किंपुन संक्षेपेणेत्यभिप्रायः । सर्वभावानां च यदिदं इदं हितमिदमहितमिति नियमोऽनिश्चितः । कस्मादनिश्चितः? यतो यस्मात् ते नानाविधा भावास्तत्तन्मात्रायोगक्रियादेशकालावस्थाप्रकृतिसात्म्यादीनां भेदात् तथा तथा तेन तेन प्रकारेण नानाविधविरुद्धा दृष्टाः । अनेकाभि-

त । तेनैतद्गुणं भवति । पथ्यमपि मात्रादिविशेषादपथ्यता याति, अपथ्यं च पथ्यतामिति ॥

मात्रया सेवितं मद्यं हन्ति रोगांस्तदुद्भवान् ॥
निषेव्यमाणं तिलशो विषमप्यमृतायते ।
हीनातिमात्रमशनं मरुन्निचयकोपनम् ॥
भजते विरूक्षत्वं तुल्यांशे मधुसर्पिषी ।
क्षारोऽम्लरससंयोगे मधुरीभवति क्षणात् ॥
उत्तुण्डश्यामास्तिन्दुकेन तिक्तता मधुरायते ।
हिङ्गुगैरिकसिन्धूत्थं गन्धवर्णरसाधिकम् ॥
पूगताम्बूलतद्व्येभ्यो वर्णगन्धरसोद्भवः ।
कोद्रवो हन्त्यसृक्पित्तं करोत्येव विदाहिभिः ॥

मात्रया सेवितमित्यादिना चैतदेव सविस्तरमुच्यते । मद्योद्भवात् रोगात् तदेव मद्यं विशिष्टया मात्रया पीतं नाशयति । तथा च वक्ष्यति । "हीनमिथ्यातिपीतेनेत्यादि" इति मात्राकृतो विशेषः । विषं मारणात्मकमपि तिलमात्राभ्यासेन सेवितममृतत्वं यातीति मात्राकृतो विशेषः । हीनमात्रस्यान्नस्य भोजनं मरुतो वायोः कोपनम्, अतिमात्रं निषेव्यमाणस्य सन्निपातस्य कोपनम् । स्वास्थ्यकरस्याप्याहारस्य मात्राविशेषः । मधुसर्पिषी स्वरूपेणाविरुद्धे सममात्रे विरूक्षत्वं भजेते इति मात्राकृतो विशेषः । क्षारोऽम्लसंयोगेन मधुरत्वं यातीति संयोगविशेषः । तिन्दुकेन संयुक्तया उत्तुण्डश्यामास्तिक्तत्वं मधुरत्वमिव यातीति संयोगविशेषः । हिङ्गुगैरिकसिन्धूत्थं च मिश्रीभूतं गन्धेन, वर्णेन, रसेन चाधिकं भवति । हिङ्गु संयोगे रसवर्णविशेषेणाविज्ञातमपि गन्धेन गैरिकसैन्धवे अभिभवति, गैरिकमपि वर्णेन हिङ्गुसैन्धवे, सैन्धवमपि रसेन हिङ्गुगैरिके इति संयोगविशेषः । पूगफलताम्बूलदलत्रयस्य त्रयसंयोगे मलैकारसंभवति रक्तवर्णोद्भव इति संयोगविशेषः । कोद्रवो रक्तपित्तघ्नो विदाहिभिः संयुक्तो योगवाहित्वाद्रक्तपित्तं करोतीति संयोगविशेषः ॥

कुष्ठं तत्कार्यपि तिलो हन्ति भल्लातकैः सह ।
गुडः कर्ताग्निसादस्य स हिनस्त्यभयादिभिः ॥
तृष्णात्यम्भः समदनं सर्पिरप्युपदिश्यते ।
जीवनीयमपि क्षीरं विषलेशेन मृत्यवे ॥
अपि हतोऽन्योऽन्यं विषे स्थावरजङ्गमे ।
सक्तवो वातला रूक्षाः पीतास्ते तर्पयन्ति तु ॥
विनापि चोपयोगेन मणिमन्त्रादि कार्यकृत् ।
आर्द्रकाज्जायते शुण्ठी संस्कारेण लघीयसी ॥
लघुभ्योऽपिहि सक्तुभ्यो गुरवः सिद्धपिण्डिकाः ॥
भृष्टः क्षुण्णोऽपि पृथुको रक्तशालेर्लघोर्गुरुः ॥
शालिः पिष्टो गरीयस्त्वं गोधूमादपि गच्छति ।

स्नेहदोषोत्क्लेशेन कुष्ठकारी तिलः भल्लातकैः संयुक्तो स्नेहदोषोत्क्लेशनात् कुष्ठं हन्तीति संयोगविशेषः । अग्निसादकरोऽपि गुडः हरीतकीशुण्ठीप्रभृतिभिः संयुक्तो न करोतीति संयोगविशेषः । तृषि तृष्णायामम्भः दीपनमपि च समधूच्छिष्टं पथ्यमिति संयोगविशेषः । दीपनस्यापि शोषकत्वात्तृष्णापथ्यत्वम् । क्षीरं जीवनीयं प्राणधारकमपि विषलेशे देहविनाशेऽपि न मारयति । विषलेशो विषभूतस्य शोधनादिनाशेषः । स्थावरजङ्गमे विषे तुल्ये सदृशे अपि मारणात्मकत्वेन शरीरविपत्तौ अपि परस्परं नाशकारणे । स्थावरं विषं जङ्गमेन दंष्ट्रादिभवेन विषेण संयोगे नश्यति, जङ्गमं स्थावरविषेणेति संयोगविशेषः । सक्तवो रूक्षा वातलाश्च सन्तो जलमिश्रिताः पीतास्तर्पणा इति संयोगविशेषः । मणिमन्त्रादिकं शरीराद्यदनुपयुक्तमपि ज्वरादीन्शमयतीति स्वभावविशेषः । आर्द्रकाच्छुण्ठ्याः सम्भवः तस्यास्तु लघुत्वं संस्कारविशेषः । स्वभावलघुभिः सक्तुभिः कृताः सिद्धपिण्डिका गुरव इति संस्कारविशेषः । स्वभावलघुनोऽपि रक्तशालेः सम्भूतो भृष्टो मुसलक्षुण्णश्च पृथुको गुरुत्वं यातीति क्रियास्वभावकृतो विशेषः । लघुःशालिरपि पिष्टोऽपिष्टात् स्वभावगुरुतो गोधूमादप्याधिकं गुरुत्वं यातीति क्रियाविशेषः ॥

लघुपित्तहरा लाजा व्रीहितो गुरुपित्तलात् ॥
सङ्ग्राहिणो लघोर्मुद्गात् कुल्माषो भेदनो गुरुः ।
आमं ग्राहितरं तक्रं नागरीकृतमार्द्रकम् ॥
गुडाचोयाच्च सुतरां मूत्रलं गुरु पानकम् ।
गरीयो गुडदध्युत्था रसाला चातिशुक्लला ॥
दण्डाभिमथनाद्धो गुरुणश्चातिशोफदात् ।
अनुद्धृतस्नेहमपि तक्रं शोफहरं लघु ॥
सर्पिः स्निग्धतरं हन्ति नार्दितं नवनीतवत् ।

व्रीहिवः पित्तकरात् गुरोश्च सम्भूता लाजा लघवः,

काराएवरोगा रुक्सामान्यादसंख्यभेदा वा प्रत्येकं समुत्थानस्थानसंस्थानवर्णनामवेदनाप्रभावोपक्रमविशेषात् । ते यथास्थूलं यथास्वमेवोपदेक्ष्यन्ते । असङ्ख्येयत्वाच्च दोषलिङ्गैरेव रोगानुपक्रमं च विभजेत् ।

तत्र निजा ये वातादिदोषत्रयोत्थाः तेषु स्वैः स्वैः हेतुभिः पूर्वं वातादयो वैषम्यमापद्यन्ते . तैस्तैर्वातादिभिर्व्यथाभिनिर्वर्तते . आगन्तवो बाह्यहेतुनाः . तेषु प्रहारेण शस्त्रप्रहारादिना हेतुना पूर्वं व्यथा जायते . ततश्च तत एव दोषवैषम्यम् . तेन च दोषवैषम्येण पुनर्बहुरूपा रुगनुबध्यते प्रवर्तते च . तस्मात् सर्वे रोगा रुक्सामान्यानुगतत्वादेकाकारा. . अथवा प्रत्येकं समुत्थानादिविशेषैर्वैचित्र्यादसंख्यभेदाः एकोपि ज्वरादिसमुत्थानादिभेदविशेषादनेकविकारता यान्तीत्यर्थः । समुत्थानं निदानम् . स्थानं देहदेशः . संस्थानं लक्षणम् वर्णः पाण्डुपीतादिः नाम ज्वरादि . वेदनाः शूलादयः ; प्रभावो व्याधिशक्तिः . उपक्रमश्चिकित्सा एतावता हि सर्वे ज्वराः परस्परव्यावृत्ताः सम्पद्यन्ते . अत एव व्याधीनामसंख्यत्वम् . तत्र च ये स्थूला व्याधयः ते यथास्वमध्यायेषु निदानचिकित्सितेषूपदेक्ष्यन्ते . ये तु सूक्ष्मास्ते असंख्येयत्वात् प्रतिपदं वक्तुमशक्या. . अतः तान् वातादिलक्षणैर्वेदितव्यानित्यत्रमेत् . ज्ञातस्वरूपाणां वातादिविशेषणैरुपक्रमञ्च विभजेत् . कुत एवमित्याह . दोषा एवेत्यादि .

दोषा एव हि सर्वरोगैककारणम् । यथैव शकुनिः सर्वतः परिपतन् दिवसं स्वां च्छायां नाऽतिवर्तते । यथा वा कृत्स्नं विकारजातं वैश्वरूप्येण व्यवस्थितं गुणत्रयमप्यतिरिच्य वर्तते । तथैवेदमपि कृत्स्नं विकारजातं दोषत्रयमिति। यथा च विद्युद्वर्षादयो नभसि भवन्ति न त्ववश्यं निमित्तस्त्ववश्यमपि । तरंगबुद्बुदादयश्चाम्भसि तथा दोषेषु रोगाः ।

सर्वेषां रोगाणां वातादय एव दोषा एकमेव कारणम् . न हि दोषेण विना कश्चिदपि रोगा दृश्यन्ते . दृष्टान्तो यथा शकुनिः सरिद्वनोदधिविमानादिषु पतन् सर्वमपि दिवसं पर्यटन्नपि विना स्वच्छायया न दृश्यते . तद्वद्देशकालभेदेपि रोगा दोषेण . यथैवेत्यादिना . सर्वरोगाणां सर्वदोषकारणत्वोक्तौ दृष्टान्तः . यथा कृत्स्नं निरवशेषं वैश्वरूप्येण व्यवस्थित प्रपञ्चादिः गुणत्रय सत्त्वरजस्तम आख्यमपि अतिरिच्य न वर्तते . तद्वदिदमपि ज्वराद्याख्य विकारजातं दोषत्रयमप्यतिरिच्य न वर्तते . ननु च दोषाश्शरीरे नित्य सन्निहिताः तत् कथं कदाचिद्रोगोत्पत्तिरित्याह . यथा चेत्यादि . यथा यद्यपि विद्युद्वर्षेन्द्रचापादयो नभसि भवन्ति . तथाऽपि नावश्यं विनैव निमित्तेन भवन्ति . निमित्तेन तत्र संयोगादिनावश्य भवन्ति एव तरङ्गादयश्चाम्भसि नदद्वादेषु नभप्रस्थेषु विद्युदादिवत्या रोगा असात्म्यादिनिमित्तमाश्रित्य भवन्ति . नानिमित्तेन .

त्रिविधन्तु निमित्तमेषामसात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्च । ते पुनः प्रत्येकमतियोगाऽयोगमिथ्यायोगभेदाद् त्रिधा भिद्यन्ते । तत्र यथास्वं चक्षुरादीन्द्रियाणां रूपादिभिरर्थैरतिसंसर्गोऽतियोगः । अल्पशो नैव वा संसर्गस्त्वयोगः । सूक्ष्मातिदूरान्तिकस्थातिभास्वद्भैरवाभियविकृतादिदर्शनम् । द्विष्टात्युच्चपरुषभीषणादिश्रवणम् । पूत्यमेध्यातितीक्ष्णोग्रमतिकूलाद्याघ्राणम् । स्वभावादिभिराहारकल्पनाविशेषायतनैरपथ्यानां रसानामभ्यवहारः तथा स्नानादीनां शीतोष्णादीनाञ्च स्पृश्यानामयथावदुपसेवनमशुचिभूताभिघातविषवातादिसंस्पर्शश्च मिथ्यायोगः ॥

एतदेवाह त्रिविधमित्यादि : एषां दोषाणां त्रिविधं निमित्तम् . त्रिमित्याह असात्म्येत्यादिना . एवमसात्म्यादि तत्र प्रत्येक हीनानि मिथ्यायोगभेदेन त्रिधा भिद्यन्ते . तत्र इन्द्रियाणां चक्षुरादीनां रूपादयो [illegible]

चक्षुरादीनां स्वैः स्वैः रूपादिभिरर्थैरत्यर्थं संयोग इन्द्रियार्थातियोगः. एवं स्वेन विषयेण इन्द्रियस्य स्वल्पः संयोगो नैव वा संयोगोऽयोगः. सूक्ष्मादिदर्शनं चक्षुषो मिथ्यायोगः. सूक्ष्मं सूक्ष्माकारं. दूरं विप्रकृष्टं दूरस्थम्. अन्तिके निकटे तिष्ठतीत्यन्तिकस्थं. अतिभास्वरमतिदीप्तिमत्. भैरवं भीषणम्. अक्लिष्टग्रहणं सर्वत्र प्रकृतरूपादिविपरीतग्रहणार्थम्. द्विष्टाप्रियादिशब्दश्रवणं श्रोत्रमिथ्यायोगः. भीषणो भयानकः. पूत्यादिगन्धघ्राणं घ्राणमिथ्यायोगः. तीक्ष्णमुद्वेगकृत्. उग्रं स्वरूपेणोत्कटं. प्रतिकूलमनिष्टम्. रसनामिथ्यायोगो यः स्वभावसंयोगभावनाभाजनमानादिभिराहारस्य नानाविधकल्पनाविशेषहेतुभिरपथ्यानां रसानामभ्यवहारः. स्पर्शनमिथ्यायोगो यत् स्नानादीनां स्पृश्यानामयथावद्विपर्यासेन सेवनमशुच्यादीनां स्पर्शश्च. इतीन्द्रियार्थानां मिथ्यायोगः.

कायवाङ्मनोभेदेन तु त्रिविधमप्यहितं कर्म प्रज्ञापराधः । तत्र कायादिकर्मणोऽतिमात्रा प्रवृत्तिरतियोगः । अल्पशो नैव वा प्रवृत्तिरयोगः । वेगोदीरणधारणविषमाङ्गचेष्टनस्खलनकण्डूयनप्रहारप्राणायामादि । तथा क्षुत्पिपासाऽर्धभुक्तभाषणादि । भयशोकेर्ष्यामात्सर्यादि । दशविधं चाकुशलं कर्म यथास्वं मिथ्यायोगः । परिणामः काल उच्यते । सोऽपि शीतोष्णवर्षभेदात्त्रिधा । तत्राऽतिमात्रस्वलक्षणः कालोऽतियोगः । हीनस्वलक्षणस्त्वयोगः । विपरीतो मिथ्यायोगः । त एतेऽतियोगादयः सामान्यतोऽनुपशयलक्षणाः । सर्वो वा प्रज्ञापराध एवाऽयं यदेषामविवेचनम् । अर्थकर्मकालाः पुनःसम्यग्योगेनोपनयाद् भूयिष्ठं स्वास्थ्यहेतवः । तत्राऽपि रसवर्ज्या विषया यथायथमिन्द्रियं बाधन्तेऽनुगृह्णन्ति च । शेषा रसकर्मकालास्तु सर्वं देहं अपि च ।

प्रज्ञापराधः किमुच्यत आह कायेत्यादिना. कायादिभेदेन त्रिविधं कर्म. तदुभयलोकाहितं सत् प्रज्ञापराधशब्देनोच्यते. तत्र कायवाङ्मनसां स्वे स्वे धारणभाषणचिन्तनादिके कर्मण्यतिप्रवृत्तिः प्रज्ञापराधजन्यः कर्मातियोगः. एवं स्वल्पा नैव वा प्रवृत्तिरयोगः. वेगोदीरणादिकर्म यथास्वं कायादिभेदेन प्रज्ञापराधो मिथ्यायोगः. तत्र वेगोदीरणादिप्राणायामान्तं क्षुदादिभाषणान्तं भयादिमात्सर्यान्तं यथासंख्येन कायवाङ्मनसां मिथ्यायोग इति यथास्वशब्दार्थः. भाषणशब्दस्य क्षुत्पिपासाभिर्भुक्तशब्देन च समासः. दशविधं हिंसादिकर्म यथास्वं यथायोग्यं कायादीनां मिथ्यायोगः. तत्र हिंसा स्तेयमन्यथाकामश्च कायिकम्, पैशुन्यं परुषमनृतं सम्भिन्नालापश्च वाचिकम्, व्यापादोऽभिध्या दृग्विपर्ययश्चेति मानसम्. इति यथास्वशब्दात् प्रविभागः. हिंसादयः पूर्वं व्याख्याताः. परिणामः किमुच्यत आह. परिणामः काल उच्यते. स च कालः शीतादिभेदेन त्रिविधः. तस्य कालस्य यथास्वं लक्षणं शीतोष्णवर्षलक्षणमतिमात्रं यदा भवति तदा कालातियोगः. उष्णादौ काले हीनोष्णादित्वं हीनयोगः. तथा उष्णकाले औष्ण्यस्य स्वलक्षणस्य विपरीतं शीतं यदा भवति तदा कालमिथ्यायोगः. एतेषां त्रयाणामतियोगादीनामनुपशयः देहासुखकारित्वं लक्षणम्. अथवा यदेतत् सर्वेषामिन्द्रियातियोगादीनामपि यत्नेन तत्सर्वं प्रज्ञापराध एव भवति. अर्थादीनां सम्यग्योगेन देहसुखाहरणात् स्वास्थ्यहेतुत्वम्. तत्राऽपि मध्ये अर्थादिषु रसवर्ज्याः शब्दादयो विषया यथास्वमिन्द्रियमेवातियोगादिभिर्बाधन्ते. सम्यग्योगेनेन्द्रियमेवानुगृह्णन्ति. शेषा रसकालकर्मादयः अतियोगादिभिः सर्वं देहं बाधन्ते. सम्यग्योगेन चानुगृह्णन्ति. रसस्य द्रव्यगतस्यातियोगादिना सर्वदेहानुग्रहः. अपि चेति वाक्यालङ्कारे समुच्चये.

सर्वभावानां भावाभावौ नान्तरेण योगातियोगादीन् व्यवस्येत् । सर्वेषां पुनर्विकाराणां निदानदोषदूष्यविशेषेभ्यो भा-

वाभावविशेषा भवन्ति । यदा ह्येते त्रयो निदानादिविशेषात् नाऽन्योन्यमनुबध्नन्त्यथवानुबध्नन्त्यबला वा न तदाऽभिनिर्वर्तन्ते व्याधयश्चिराद्वाऽभिनिर्वर्तन्ते तनवो वा भवन्त्यसम्पूर्णलिंगा वा । विपर्यये तु विपरीताः ।

सर्वभावानां बाह्याध्यात्मिकानां भावाभावौ नान्तरेण योगातियोगादीन् भवतः । भावश्चाऽभावश्च भावाभावौ । योगश्चाऽतियोगादयश्च योगातियोगादयः । तैर्विना तु न भवति । सर्वभावानां देशकालकर्मादिसम्योगेन भावः । तथा देशकालकर्मातियोगादिभिः सर्वभावानामभाव इति । [illegible] । एवं सामान्ये स्थिते विकाराणां [illegible] भावाभाववविशेषा निदानादिविशेषात् भवन्ति । यदेत्यादिना एतदेव विवृणोति । एते निदानादयस्त्रयो वा परस्परमनुबन्धं गृहणन्ति [illegible] गृहणाति । [illegible] वा भवन्ति न तदा व्याधयोऽभिनिर्वर्तन्ते । अथवा चिरादभिनिर्वर्तन्ते निर्वृत्ताश्च तनवः स्तोकबला वा असम्पूर्णलिङ्गा वा भवन्ति । [illegible] हेतुर्भवति । यदैतानि त्रीणि निदानादीनि परस्परमनुबध्नन्ते बहुलानि वा भवन्ति तदा हि निर्वर्तन्ते व्याधयः आशु च बलवन्तः सम्पूर्णलिङ्गाश्च ।

त्रयश्च रोगाणां मार्गा बाह्यमध्याभ्यन्तराः तत्र बाह्यो रक्तादिधातवस्त्वक् च । स पुनश्शाखाख्यः । तदाश्रयाः गण्डपिटकालज्यपचीचर्मकीलार्बुदाधिमांसमषव्यङ्गादयो बहिर्भागाश्च शोफार्शोगुल्मवीसर्पविद्रध्यादयः । मध्यो मूर्द्धहृदयबस्त्यादीनि मर्माण्यस्थिसन्धयः । तत्रोपनिबद्धाश्च स्नायुसिराकण्डराद्यः तदाश्रयाः । पक्षवधग्रहापतानकार्दितराजयक्ष्मास्थिसन्धिशूलगुदभ्रंशादयो मूर्द्धादिरोगाश्च । आभ्यन्तरो महास्रोतः शरीरमध्यं महानिम्नमामपक्वाशयाद्याश्रयः कोष्ठोऽन्तरिति पर्यायाः । तदाश्रया ज्वरातीसारछर्द्यलसकविषूचिकाश्वासकासहिध्माऽनाहोदरप्लीहादयोऽन्तर्भागाश्च विसर्पशोफार्शोविद्रधिगुल्मादयः ।

एते च व्याधयो न विनाऽऽश्रयविशेषेण भवन्तीत्यत उच्यते । त्रय इत्यादि । एषां रोगाणां बाह्यादयः त्रयो मार्गाः । चकारः प्रसक्तवक्तव्यसमुच्चये । तत्र रक्तादयः षट् धातवः त्वक् च बाह्यो रोगमार्गः । स च शाखाशब्दवाच्यः तदाश्रया बाह्याश्रया गण्डादयः । तथा ये शोफादयः स्वपर्यायेषु बहिर्भागा उक्ताः तेऽपि बाह्याश्रयाः । मूर्द्धादीनि मर्माण्यस्थिसन्धयोऽस्थिसम्बन्धाश्च स्नाय्वादयो मध्यो रोगमार्गः । तदाश्रयाः पक्षवधादयः । आभ्यन्तरपर्याया महास्रोत आदयः एतैश्च पर्यायैर्गतार्थाः तदाश्रया ज्वरादयः अन्तर्भागाश्च शोफादयः तदाश्रयाः कोष्ठाश्रया इति यावत् ।

ते च रोगाः स्वप्रधाना भवन्त्यन्यपरिवारा वा क्रमादनुबन्ध्यनुबन्धाख्याः । तत्राऽऽद्याः स्वतन्त्राः स्पष्टाकृतयो यथास्वं समुत्थानोपशयाश्च । इतरे तु तद्विपरीताः तद्वच्च दोषा अपि । तत्रान्यपरिवारा व्याधयो द्विविधाः । पुरोगामिनोऽनुगामिनश्च । तेष्वाद्याः पूर्वरूपसंज्ञाः । उपद्रवास्त्वितरे । तान्यथायथमेव वक्ष्यमाणानुपलक्षयेत् । प्रधानप्रशमे च प्रशमो भवति तेषामनुपशाम्यतो वा पश्चादुपक्रमेत् । त्वरितं वा बलवन्तमुपद्रवं प्रधानाविरोधेन । स हि पीडाकरतरो भवति व्याधिपरिक्लिष्टदेहत्वात् प्रमेहपिटकादिवत् । तथाऽन्यः प्रधान एव रोगोऽन्यस्य प्रधानस्य हेतुः भवति । यथा ज्व-

रो रक्तपित्तस्य रक्तपित्तं वा ज्वरस्य । तौ कासश्वासस्य । प्लीहा जठरस्य । तच्छ्वयथोः । अर्शांसि गुल्मोदरातीसारग्रहणीनां । प्रतिश्यायः कासज्वरयोः । तौ क्षयस्य । क्षयः शोषस्य । एकश्चाऽपचारो निमित्तमेकस्य व्याधेः बहूनां च तथा बहवः तद्वदेकं लिंगम् । एवमेव प्रशमेऽभ्युपायः तथा स एवाऽन्यस्य प्रकोपे । तस्मात्तानवहितः सम्यगागमादिभिः परीक्षेत ।

ते च व्याधयः कदाचित् स्वप्रधाना भवन्ति कदाचिदन्यव्याधिपरिवाराः । तत्र स्वप्रधानस्याऽनुबन्धीत्याख्यायेत्यनयाऽन्यपरिवारस्याऽनुबन्ध इत्याख्यान करार्थं । तत्र ये स्पष्टलक्षणा व्याधयः यथाऽन्नी [illegible] स्वप्रधाना ज्ञेयाः एतद्विपरीता इतरे [illegible] भवन्ति । ये ऽन्यव्याधिपरतन्त्रोपरान्ता अस्पष्टलक्षणाः परायत्तनिदानोपशमाश्चान्यपरिवारा इति । एवमनेन प्रकारेण दोषा अपि द्वयाऽपि स्वतन्त्रपरतन्त्रा ज्ञेयाः । तत्र अन्यपरिवारा व्याधयस्तेऽपि द्विविधाः । कदाचिदेकोऽन्यस्य व्याधेः पूर्वोत्पन्नो भवति । कदाचिदनुत्पन्नः । तत्र पूर्वोत्पन्नः पूर्वरूपसंज्ञाः यथा ज्वरस्याऽङ्गमर्दादयः । पश्चादुत्पन्नेन उपद्रवसंज्ञाः यथा तस्यैव श्वासादयः । तांश्चाऽन्यपरिवारान् यथायथं निदानस्थानादिषु वक्ष्यमाणानुपलक्षयेत् । तेषां चाऽन्यपरिवाराणां प्रधानप्रशमे प्रशमो भवति । अथवा बलवत्त्वात् प्रधानप्रशमेन [illegible] प्रधानादुत्तरकालमुपक्रमेत् । यतः [illegible] प्रधानव्याधिपरिक्लिष्टशरीरत्वात् स बलवान् पीडाकरो भवति यथा प्रमेह [illegible] पिटकाः । [illegible] रोगः प्रधान एव प्रधानस्य हेतुर्भवति यथा [illegible] । तत्र हि रोगस्वरूपादेव [illegible] कोपः । अत एव रोगो [illegible] । इदं सर्वोपम् । यथा धातुक्षयः [illegible] । एकादश रोगसमूहः । तथा एको [illegible] एकस्य व्याधेः कारणतां याति । तथाऽन्यो [illegible] । [illegible] एकं बहूनां लक्षणं भवति

तथा य एवैकस्य व्याधेः प्रशमेऽभ्युपायः स एवाऽन्यस्य प्रकोपे । तस्मात्तान्यथोक्तान सम्यगिदन्त्यः आगमादिभिश्चतुर्भिः परीक्षेताऽवहितस्सन् सामान्य परित्यज्य विशेषकाष्ठामधिरोहेत् ।

तत्रागमतो रोगमेवमेवं प्रकोपनमेवं योनिमेवमधिष्ठानमेवमात्मानमेवं वेदनमेवं रूपशब्दगन्धरसस्पर्शमेवं पूर्वरूपमेवमुपद्रवमेवं वृद्धिस्थानक्षयान्वितमेवमुदर्कमेवं नामानम् । तस्मिन्नियं प्रतीकारस्य प्रवृत्तिः अन्यथा निवृत्तिः । प्रत्यक्षतस्त्वाऽऽतुरस्य यथास्वमिन्द्रियैर्वर्णसंस्थानप्रमाणोपचयच्छायाविण्मूत्रच्छर्दिताधिक्यमान्त्रकूजनमंगुल्यादिषु सन्धिषु स्फुटनं देहशकृद्व्रणादिगन्धं सुप्तशीतोष्णस्तंभनसंस्पन्दश्लक्ष्णखरस्पर्शश्च । प्रकृतिविकृतियुक्तमास्यरसन्तु प्रश्नेन तथा सुछर्दनदुच्छर्दनत्वं मृदुक्रूरकोष्ठतां स्वप्नदर्शनमभिप्रायं जन्मामयमप्रवृत्तिनक्षत्रद्विष्टेष्टसुखदुःखानि च । तथा वयः प्रत्यक्षेण च । अनुमानतस्तु यूकापसर्पणेन शरीरवैरस्यम् । मक्षिकोपसर्पणेन शरीरमाधुर्यम् । तथाऽग्निं जरणशक्त्या । बलं व्यायामशक्त्या । गूढलिंगं व्याधिमुपशयाऽनुपशयतः । दोषप्रमाणमपचारविशेषेणायुषः क्षयं रिष्टैः । प्रकृतिसत्त्वसारसात्म्यबलाननुशीलनेनेति । भवति चात्र ।

तत्रागम आप्तोपदेशः । तेनागमेनैवं रोगमेव प्रकोपनमित्यादिना परीक्षेत । यथा शाखे [illegible] रोगस्य किं प्रकोपनाद्युत्पत्तिविधानं [illegible] । प्रकोपनमाहारादि । योनिः कारणं [illegible] । आत्मा [illegible] अधिष्ठानमाश्रयः । वेदना रुजा । रूपादयः प्रसिद्धाः । उदर्को व्याधेः फलम् । प्रत्यक्षतस्त्वातुरस्य यथास्वमिन्द्रियैर्वर्णादिकं परीक्षेत । तत्र स्पर्शा-

कं दर्शनेन . आन्त्रकूजनादिकं श्रोत्रेण . शीतादिकं स्पर्शं प्राकृतं वैकृतञ्च स्पर्शनेन । आस्यरसं मुच्छर्दनस्यादिकञ्च प्रश्नेन . जन्मदेशकालाहारसात्म्यादिविशेषान् . वयः प्रश्नेन प्रत्यक्षेण च . जन्मादिवमदर्शनादि च . अनुमानादिभिरनुशीलनात् सुनीतम् अप्रमर्षणमपराय यमनम् उपसर्पणमभिगमनम् अनवाप्तोऽप्यपरिशयः, तस्यापन्यवबोधेन दोषस्याल्पत्वञ्च दृष्ट्वा कल्पयन् , प्रकृतिरोगादिकृत्स्ना . सतत प्रतिक्षणं . नाम्यमुपैतिम् . भवति चात्रैतद्विषये तन्त्रान्तरीति .

ज्ञानबुद्धिप्रदीपेन यो नाऽविशति योगवित् ।
आतुरस्याऽन्तरात्मानं न स रोगांश्चिकित्सति ॥
द्वाविमौ व्याधितौ व्याधिस्वरूपस्याप्रकाशकौ ।
तत्रैको गुरुव्याधिः सत्त्वदेहबलाश्रयात् ॥
लघुव्याधिवदाभाति लघुव्याधिरतोऽन्यथा ।
बालावयवमात्रेण तयोर्मुह्यति बालिशः ॥
ततोऽल्पमल्पवीर्यं वा विपरीतमतोऽथवा ।
पथ्यं विपर्यये युञ्जन्प्राणान्मुष्णाति रोगिणाम् ॥
ज्ञानांशेन न हि ज्ञानं कृत्स्नेऽर्थे संप्रवर्तते ।
बुभुत्सेतमपि ज्ञातस्तत्तत्तन्त्रानुशीलनात् ॥
अभियुक्तस्तु सततं सर्वमालोच्य सर्वथा ।
न जातु स्खलति प्राज्ञो विषमेपि क्रियापथे ॥

आगन्तुरन्वेति निजं विकारं
निजस्तथाऽऽगन्तुमतिप्रवृद्धः ।
तत्रानुबन्धं प्रकृतिञ्च सम्यक्
ज्ञात्वा ततः कर्म समारभेत ॥

इति रोगभेदीयो नाम द्वाविंशोऽध्यायः ।

ज्ञानसहिता बुद्धिः ज्ञानबुद्धिः . सैव पदार्थदर्शनहेतुत्वात् प्रदीपः तेन ज्ञानबुद्धिप्रदीपेनाऽऽतुरस्य तमो ग्रस्तमन्तरात्मानं योगवित् नाविशति स रोगान् न चिकित्सति . चिकित्सितुं न शक्नोतीत्यर्थः . द्वावि- मावित्यादिना आतुरस्वरूपस्य दुर्विज्ञेयत्वं प्रकाशयति . द्वाविमावातुरौ व्याधिस्वरूपस्याप्रकाशकौ , एतयोः स्थितस्य व्याधेः स्वरूपं ज्ञातुं न शक्यत इत्यर्थः कौ ता- वित्याह तत्रैको व्याधितो गुरुव्याधिरपि सन् सत्त्व- देहबलाश्रयात् लघुव्याधिवदाभाति तत्र हि यो बा- लिशः स तत्र बालावयवमात्रं दृष्ट्वा स्वरूपज्ञाने मु- ह्यति ततो गुरुव्याधावल्पमल्पवीर्यं वा पथ्यं विपरी- ते गुरुव्याधौ प्रयुञ्जानो वैद्यो रोगिणां प्राणान्मुष्णाति . अतोऽथवा विपरीतं बहुमात्रं बहुवीर्यं वा पथ्यं विपर्यये लघुव्याधौ युञ्जानः प्राणान्मुष्णातीत्यर्थः . तथा भिष- ग्वैद्यः तन्त्रानुशीलनेन व्याधितस्य बुद्धिमन्तं बोद्धुमिच्छे- दित्यर्थः यतो ज्ञानांशेन स्वल्पेन ज्ञानेन कृत्स्ने ज्ञे- ये सम्यक्प्रवर्तनं नैकेन ज्ञातेनान्यद्विज्ञानं ज्ञानं भ- वति . यस्तु प्राज्ञः शास्त्रे कर्मणि चाऽभियुक्तः स वि- षमे दुरवगाहे चिकित्सामार्गे न स्खलति . किं कृ- त्वा सर्वथा सर्वप्रकारेण सर्वमातुरगतमालोच्य . एव हि यतो दृश्यते . निजं विकारमतिप्रवृद्ध आगन्तुर- न्वेति आगन्तुमतिप्रवृद्धो निजः अन्वेति . स्वरूप स्यव वा तदानुगुण्येन वर्तत इत्यर्थः . तत्र तत्रानुबन्धं स्वरूपञ्च व्याधीनामितस्तथा ज्ञात्वा पश्चाच्चिकित्सार्थं कर्म समारभेत

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां- द्वाविंशोऽध्यायः ॥

# अथ त्रयोविंशोऽध्यायः ।

अथातो भेषजावचरणीयमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ।

भेषजमवचारयन् प्रागेव तावदेवमातुरं परीक्षेत । कस्मिन्नयं देशे जातस्संवृद्धो व्याधितो वा कस्मिंश्च देशे मनुष्याणामिदमाहारजातमिदं विहारजातमेतावत् बलमेवंविधं सत्वमेवंविधं सात्म्यमियं भक्तिरिमे व्याधयो हितमिदमाहितमिदमिति । प्राग्ग्रहणेन केन वा निदानविशेषेणाऽस्यकुपितो दोषः । दोषस्य ह्येकस्याऽपि बहवः प्रकोपे हेतवः । तस्माद्यथास्वलक्षणैः कर्मभिश्च बुध्वा भिषग्दोषमेवमवगमयेत । तद्यथा । किमाहारेण कुपितो वायुः किं विहारेण तथा रूक्षेण लघुना शिशिरेण वा साहसेन वेगरोधेन वा भयेन शोकेन वेति । ततश्च तत्प्रतिपक्षमौषधं प्रयुज्यमानमाशु सिद्धये सम्पद्यते । तत्र मधुराम्ललवणा रसाः कटुतिक्तकषायाश्चेतरेतरप्रतिपक्षाः । तदनन्तरश्चोपलभेत । मृदुमध्यातिमात्रविकल्पनया कथञ्चिदानमासेवितम् । एकरूपस्यापि हि हेतोः मृद्वादिविभागेन पृथक् समवेतानाञ्च दोषाणामंशांशबलविकल्पविशेषाद्व्याधेर्बलाबलविशेषः । तत्रानेकदोषात्मकेषु व्याधिष्वनेकरसेषु च भेषजेषु प-परप्रभावमेकैकशोऽभिसमीक्ष्य [illegible] भावतत्वं व्यवस्येत । नत्वेवं सर्वत्र

अनन्तरोक्तेन प्रकारेणाधिगते रोगे [illegible] षजावचरणपरिज्ञानार्थमध्यायारम्भः । अथात [illegible] तत्र भेषजावचरणप्रसङ्गे कस्मिन् देशे जात [illegible] । प्रथममातुरं परीक्षेत । एतच्च प्रायो भवत्येव [illegible] त । अन्यथा सर्वस्यापि आहारादेस्सर्वत्र सं[illegible] स्याप्रसङ्गः । भक्तिरसातत्यानुष्ठानम् । सुबोधम् । हि दोषकारणं ज्ञात्वा [illegible] माशु सिद्धये सम्पद्यते । तत्र लक्षणानि यथा । तस्य रूक्षत्वादीनि । कर्म श्वासोच्छ्वासादि । तत्र मधुराम्ललवणाः कटुतिक्तकषायाश्च यथासंख्येन [illegible] तिपक्षाः । अनन्तरोक्तेन प्रकारेण परीक्षिते [illegible] दिभेदेन व्याधिमुपलभेत । कथं एकरूपतया व्याधि हेतोः कुत्र कीदृशेन मृद्वादिना विभागेन [illegible] तमिति । तत्र मृदुशक्तिना निदानेन मृदुर्व्याधिर्भव ति । एवं मध्यशक्तिना मध्यः । अ[illegible] इति । तथा दोषाणां वातादीनां पृथग्भूतानां मि[illegible] णां वा नानाविधेनांशांशबलविशेषेण व्याधीनां बलाबलविशेषः । यदि दोषा बलवत्वेन कल्पिताः ततः तत्कार्यमपि व्याधिर्बलवानिति विशेयः । तथा तेष्वबलेषु स्वल्पबलः । तत्र सर्वे रोगाः पूर्वं त्रिदोषजा उक्ताः - तदुपक्रमणानि च भेषजानि सर्वरसानि । तथाविधेष्वनेकदोषात्मकेषु व्याधिष्वनेकरसेषु च भेषजेषु परस्पर रसदोषांशप्रभावमभिसमीक्ष्य व्याधेरौषधस्य च प्रभावमध्यवस्येत् । तेनैतदुक्तं भवति । व्याधेर्दोषबलं भेषजस्य च दोषोपशमनसमर्थमन्यतमरसादिप्रभावमभिसमीक्ष्य केन रसाद्यंशकेन कस्मिन् दोषांशे अस्मिन् व्याधाविदं भेषजमिति कृत्वा व्याधेर्भेषजस्य च उपक्रम्योपक्रमाख्यं तत्त्वमध्यवस्येत् नचैषामंशांशविकल्पना सर्वस्मिन् व्याधौ सर्वस्मिंश्च भेषजे विज्ञेया । कुत एतदाह -

न हि विषमविकृतिसमवेतानां नानात्मकानां परस्परेणोपगृहीतानामुपहतानाञ्चान्यैश्च विकल्पनैर्विकल्पितानामवयवप्रभावानुमाने -

न समुदायप्रभावतत्वमध्यवसितुं शक्यम् । तथाविधे हि समुदाये समुदायप्रभावमेवो-पलभ्य व्याध्यौषधप्रभावतत्वमवगच्छेत् । तथा कस्य धामाऽधिष्ठाय व्याधिरयमव-स्थित इति निरूपयेत् । प्रविसृतो हि दोषः स्वमेव स्थानमातङ्क्याधितिष्ठन् मूर्द्धा-दीन् वा दुस्तरो भवति । ततश्च स्था-नविशेषेण भेषजविशेषः पर्येषितव्यः ।

नहीत्यादि । यस्मादिकृत्या वैषम्येण च समु-स्तानां नानारूपाणां परस्परोपगृहीतानां परस्परेण कृतपा-रतन्त्र्याणां परस्परेण चोपहतानामापादितविकृतीनामन्यैश्च देशकालादिविकल्पैर्विकल्पितानां भावानामवयवप्रभावतत्वे-नैवसमुदायप्रभावतत्वमध्यवसितुं न शक्यते । द्रव्यस्य सयोगसंस्कारकालादिभिर्विकृतेर्दूरीकृतस्वरूपत्वात् । तस्मा-त्तथाविधे यथोक्तलक्षणे समुदायप्रभावतत्वमुपलभ्य व्या-ध्यौषधयोः प्रभावतत्वमवगच्छेत् । यत्र तुल्यगुणविप-रीतौ भावानां समुदायस्तत्रावयवप्रभावत एवाध्यवसितुं यु-क्तः । संयोगादिविशेषैरपि तथाविधानां द्रव्यस्वरूपगुण-वीर्यस्वरूपादिभ्यो विकृतेरभावादिति । तथेदमपि नि-रूपयेत् । कस्य दोषस्य धाम स्थानमधिष्ठायाऽयं कु-पितोऽवस्थितश्चेति । यतस्सचो दोषः कदाचित् स्वमेव स्थानमातङ्क्याऽधितिष्ठन् रोगं कर्तुमाश्रितो दुस्तरो भवति । कदाचिन्मूर्धादीनधितिष्ठन् दुस्तरो भवतीति सम्बन्धः । मू-र्धादिग्रहणं परस्थानोपलक्षणार्थम् । ततोऽनन्तरं स्थान-विशेषापेक्षया भेषजविशेषो बोद्धव्यः । यद्धि भेषजं स्थानविशेषस्थे दोषे हितं तदन्यस्थानस्थे ।

तत्रैवमालोचयेत् । कस्याऽयमौ-षधस्य व्याधिरातुरो वा योग्यः । कि-यतो वा । दोषानुरूपो हि भैषज्यवीर्य-प्रमाणविकल्पो व्याधिव्याधितबलापेक्षो भ-वति ।

एवं दोषभेषजयोस्साम्ये ज्ञाने कस्य भेषजस्य किं प्रमाणस्याऽयं व्याधिरातुरो वा योग्य इत्यालोचयेत् । यस्माद्दोषानुरूपमेव भेषजशक्तिमात्राविकल्पो व्याधिव्याधि-तस्य च बलापेक्षः । अन्यथा दोषानुरूपमपि भेष-जमविषये युक्तमनर्थायैव सम्पद्यते । तमेवाऽविषयं द-र्शयति ।

सहसातिबलानि संशोधनौषधान्या-ग्नेयवायव्यान्यतिसौम्यान्यतिमात्राणि वा । तथाऽग्निक्षारशस्त्रकर्माण्यल्पसत्वमातुरमल्पब-ले वातिपातयेयुः । संशमनानि तु व्याधि-बलादधिकानि तमुपशमय्य व्याधिं व्या-धिक्षपितदेहे शीघ्रमन्यमावहन्ति । शरी-रबलाधिकानि ग्लानिमूर्छामदमोहबलक्ष-यान् । अग्निबलादधिकानि ग्लानिमग्नि-सादञ्च ।

सहसेत्यादि । द्विविधानि औषधानि शोधनानि शमनानि च तत्र शोधनानि द्विविधानि । असौम्या-नि सौम्यानि च । तत्राऽसौम्यान्याग्नेयवायव्यानि । सौ-म्यानि चाऽप्यनाग्नेयवायव्यानि । तत्राऽऽग्नेयवायव्यानि संशोधनौषधान्यल्पबलमल्पसत्वमातुरमाशयेयुः । किंभूता-नि सहसाऽतिप्रयुक्तान्यतिबलान्यतिशक्तीनि । एवमति-सौम्यान्यपि सहसा मात्राधिक्येन प्रयुक्तानि तथाविधमा-तुरमाशयेयुः । तथाग्न्यादीनि किंभूतानि सहसातिप्रयु-क्तानि । तथा संशमनान्यप्यौषधानि व्याधिबलाधिक्ब-लानि तं प्रकोपकारणं व्याधिमुपशमय्य तत्क्षपिते देहे शीघ्रमेवाऽन्यमतिशीर्ततं व्याधिमावहन्ति । बलशब्द उभय-त्रापि शक्तिवाचकः । तान्येव शरीरबलादधिकानि ग्लानिमूर्छादीनावहन्ति । तान्येवाऽग्निबलादधिकानि अ-तिमात्रत्वात् ग्लानिमग्निसादञ्चावहन्तीति । व्याधातुरा-ग्निबलादधिकान्युक्तानि ।

अपि च । अतिस्थूलोऽतिकृशो दुर्बलो दुर्बद्धमांसशोणितास्थ्यंगावयवोऽल्पा-ग्निरल्पाहारोऽसात्म्याहारोऽपचितरसाररहितो वा व्याधिबलमेव तावदसमर्थस्सोढुम् । किं

पुनस्तथाविधो भेषजमेवंवेगम् । तस्मा- [illegible] - [illegible] । ता ह्यनवस्थितमृदुविक्लवहृदयाः प्रायःसुकुमाराः परायत्ताश्च । ततोऽपि विशेषेण शिशवः । तथाबलवति व्याध्यातुरेऽल्पबलमल्पं वा भेषजमकिञ्चित्करं भूय एव दोषमुत्क्लेश्य व्याधिमुदीरयेत् ।

अस्मिन् स्वगतबलव्याध्यातुरानियतभेषजप्रमेयोऽपेक्षेति समुच्चिनोति । अतिस्थूल इत्यादि । अतिस्थौल्यादन्यतमयुक्तः पुरुषो व्याधेरेव बलं मोढुमक्षमः । किं पुनस्तदुपमर्दकारिभेषजवेगम् । तस्मादतिस्थौल्यादियुक्तमविषादकरत्वादिगुणयुक्तैरौषधैरुपाचरेत् । दुर्बलान्यस्थिरश्चयानि मांसादीनि यस्य । दुर्बलो हीनबलरसाररहितोऽल्पः । उत्तरमुत्तरं गुरुभिर्लाघवैः । प्रथममतिमृदुभेषजं योज्यम् । ततः क्रमेण तीक्ष्णादिकमित्यर्थः । विभ्रमो दोषादीनां क्षोभः । अतिस्थौल्यादियुक्तमृद्वादिभिरुपाचरेत् । विशेषतोऽबला स्त्रियो मृदुभिरविषादकारिभिरौषधैरुपाचरेत् । ता अबलाः पेलवभीरुहृदयाः सुकुमाराः परायत्तस्थितयश्च भवन्ति । अबलाभ्यो विशेषतः [illegible] एवंविधा भवन्ति । अतस्तान् विशेषेण उपाचरेत् अनन्तरमतिबलं व्याध्यातुरं च स्वल्पबलं यदौषधं करोति तदुच्यते । बलवतीत्यादि । बलवति व्याध्यातुरे च स्वल्पशक्ति स्वल्पमात्रं वा भेषजं प्रयुक्तं कार्ये न किञ्चित्करं सत् भूयोऽत्यर्थं दोषमुत्क्लेश्य व्याधिमुदीरयेत् ।

योग्यमपि चौषधमेवं परीक्षेत । इदमेवं रसवीर्यविपाकमेवंगुणमेवंद्रव्यमेवं कर्मैवंप्रभावमस्मिन् देशे जातमस्मिन्नृतावेवं गृहीतमेवं निहितमेवं विहितमेवं निषिद्धमेवमुपसंस्कृतमेवं संयुक्तमेवं युक्तमनया मात्रयैवंविधस्य पुरुषस्यैवंविधे काले एतावन्तं दोषमपकर्षत्युपशमयति वा अन्यदपि चैवंविधं भेषजमभूत् [illegible] वा विशेषेण प्रयुक्तमिदमकरोत् । [illegible] णि हि [illegible] रससात्म्यसत्त्वप्रकृतिवयसामवस्थान्तराणि । यान्यनालोचितानि निहन्युरातुरम् आलोच्यमानानि तु विपुलबुद्धिमपि चिकित्सकमाकुलीकुर्युः । किं पुनरल्पबुद्धिम् तस्मादभीक्ष्णशः शास्त्रार्थकर्मानुशीलनेन संस्कुर्वीत प्रज्ञाम् । अपि च । [illegible] व्याधयो ये शास्त्र [illegible] प्रति निर्दिष्टाः । तत्र प्राज्ञ एव दोषादिगुरुलाघवेन सम्यगध्यवस्येदन्यतर[illegible] ष्ठायाम् ।

एवमनन्तरोक्तेन परीक्षकल्पेन परीक्षितं योग्यमौषधं पुनः रसवीर्यादिभिः परीक्षेत । सुबोधम् । कुत एतदित्याह । सूक्ष्माणीत्यादि । दोषौषधादीनामवस्थान्तराणि सूक्ष्माणि दुर्लक्ष्याणि यान्यनालोच्यमानान्यविकल्प्यमानान्यातुरं निहन्युः । आलोच्यमानान्यपि विपुलबुद्धिं विस्तीर्णबुद्धिमपि चिकित्सकमाकुलीकुर्युः । किं पुनरल्पबुद्धिम् । तस्मादभीक्ष्णमत्यर्थं शास्त्रार्थस्य कर्मणश्चिकित्सात्मकस्यानुशीलनेनाभ्यासेनात्मनः प्रज्ञां संस्कुर्वीत । यथैवंविधे चिकित्साकल्पे योग्यो भवति । अपि चेति प्रस्तावसमुच्चये । सन्ति तथाविधा व्याधयो ये शास्त्र उपक्रम प्रति चिकित्सासम्पादनायोत्सर्गापवादैश्च निर्दिष्टास्तत्र तथाविधे उत्सर्गापवादसङ्कुले विषये अन्यतरनिष्ठायामेकान्तप्रयोगे प्राज्ञ एव दोषदूष्यादि गुरुलाघवेन हेतुयुक्त्याध्यवस्येत् ।

कालश्च भेषजस्य योग्यतामादधाति । स क्षणलवमुहूर्तादिभेदेनातुरावस्थया च द्विधोक्तः प्रागपि च । शीतो-

अन्तराभक्तं नाम यत् पूर्वाह्णे भोजनमुपयुज्य तस्मिन् जीर्णे मध्याह्ने औषधमुपयुज्यते . तस्मिन्नौषधे जीर्णे तदहरेव पुनरपराह्ने भोजनमिति . अनेनान्तराभक्तस्य कालेन॰ निशोपयुज्यमानस्यौषधस्य कालो व्याख्यातः . एतदेवाह . अनेन रात्रिर्व्याख्यातेति . तेनैतदुक्तं भवति . निशा यस्यौषधस्य काल उक्तः तदेव मुपयुज्यते . सायं भुक्ते जीर्णे याममात्रगतायामिशायामौषधमुपयोज्यम् . तस्मिंश्च जीर्णे पुनर्द्वितीयेऽह्नि प्रातर्भोजनमिति . एतच्च प्रासंगिकमन्यथ परित्यज्य तदिदानेनान्तराभक्तं परामृश्य दीप्ताग्निरित्यादि विषयस्य निर्देशः . यस्मान्निशायां प्रयुज्यमानस्य जत्रूर्ध्वामयेष्वित्यनेन विषयं वक्ष्यति .

सामुद्गं यदाऽऽद्यन्ते च भुक्तस्य । तत्तु लघ्वल्पान्नयुक्तं पाचनावलेहचूर्णादि हिध्मायां कम्पाक्षेपयोरूर्ध्वाधस्संश्रये च दोषे ।

सामुद्गं नाम यदौषधमुपयुज्य पश्चात्तत्कालमेव भोजनमुपयुज्य तदनन्तरं तत्कालमेव पुनस्तदेवौषधमिति . तच्च हिध्मादिषूर्ध्वशरीरे अधरशरीरे च युगपत्स्थितेषु दोषेषु पाचनलेहचूर्णादिकं योज्यम् . आदिग्रहणेन दीपनानामनुक्तेशकराणामिरपायाणां परिग्रहः .

मुहुर्मुहुस्तु पुनःपुनर्भुक्ते यदभुक्ते वा । तच्छ्वासकासहिध्मातृट्छर्दिषु विषनिमित्तेषु च विकारेषु ।

मुहुर्मुहुर्नाम यत् भुक्ते चाभुक्ते च प्रतिक्षणमुपयुज्यते . तच्छ्वासकासादिषु विषजेषु च विकारेषु योज्यम् .

सग्रासं यत् ग्राससम्पृक्तम् । ग्रासान्तरं यत् ग्रासयोर्ग्रासयोर्मध्ये द्वयमप्येतत् प्राणानिलविकृतौ । तथा सग्रासं चूर्णलेहवटकादिकमग्निदीपनं वाजीकरणानि चोपयुञ्जीत । ग्रासान्तरं हृद्रोगे धूमञ्च । जत्रूर्ध्वामयेषु निशायाम् ।

सग्रासं नाम यत् ग्रासेन ग्रासेन सहोपयुज्यते . सान्तरनाम यत् ग्रासयोर्मध्ये ग्रासमुपयुज्य पुनर्भेषजं नर्मासमिति . एतद्द्वयं प्राणे प्रासान्तरञ्च . . . विकृतौ योज्यम् . अयन्तु विशेषः . . . . मग्निदीपनाय वाजीकरणाय चोपयुञ्जीत . ग्रासान्तरं पुनर्हृद्रोगोपशमाय . वमनौषधं धूमञ्च . . . येषु निशायामुक्तम् .

तत्रायेकाले तृषितः पीतशीताम्बुरजीर्णी क्षुधितः क्षामश्च भेषजं वर्जयेत् शेषेषु वाऽह्न्यमसात्म्यमतितीक्ष्णं भूरिमात्रञ्चेति । भवति चात्र श्लोकः ।

तत्राये अभक्ताख्ये काले तृषितः पीताम्बुरजीर्णी क्षुधितः क्षामश्च भेषजं सर्वं वर्जयेत् . शेषेषु प्राग्भक्तादिषु कालेषु अह्न्यत्वादियुक्तं भेषजं वर्जयेदिति . भवति चात्र श्लोक इति सामान्योपक्रमेणोक्तवचनम् .

रोगमादौ परीक्षेत तदनन्तरमौषधम् ।
ततः कर्म भिषक् पश्चात् ज्ञानपूर्वं समाचरेत् ॥
निवृत्तोऽपि पुनर्व्याधिरल्पेनायाति हेतुना ।
देहे मार्गीकृते दोषैश्शेषस्सूक्ष्म इवानलः ॥
तस्मात्तमनुबध्नीयात् प्रयोगेणानुपायिना ।
सिद्धानामपि योगानां पूर्वेषां दार्ढ्यमावहन् ॥

अध्यायार्थमुपसंहरति . निदानादिभिः पञ्चभिरुपायैः प्रथमं रोगं परीक्षेत . तदनन्तरमनन्तरोक्तेन प्रकारेण भेषजकल्पेतिन च योग्यायोग्यतया भेषजं परीक्षेत . ततो रोगस्य भेषजस्य च स्वरूपेण ज्ञाते ज्ञानपूर्वं चिकित्साख्यं कर्म समाचरेत् . ज्ञानपूर्वमिति

सुविचारयेदित्यर्थः . तथाविधेन कर्मणा निर्हृतोपि सशेषस्सन् देहे वातादिभिर्दोषैर्मार्गीकृते लब्धसंस्कारे क्वचित् स्वल्पमेव कारणमाश्रित्य पुनरायाति . दृष्टान्तो यथा . निर्वाणशेषस्सूक्ष्मोप्यनलः स्वल्पेनैव हेतुना पुनर्वृद्धिं याति . तस्मात्तु पुनरागतं रोगमविरोधेन प्रयोगेणानुवर्तनीयम् . किंकुर्वन्नाह . पूर्वेषां योगानां यैर्योगैस्स रोगः पूर्वं शान्त आसीत् तेषां स्वयोगानुसारेण दार्ढ्यमावहन् संस्कारं बृंहयन्निति यावत् .

सात्म्यात्स्वादुभावाद्वा पथ्यं द्वेष्यत्वमागतम् ।
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः ॥
मनसोऽर्थानुकूल्येन तुष्टिरूर्जा रुचिर्बलम् ।
सुखोपभोगता च स्याद्व्याधेश्चातः परिक्षयः ॥
लौल्याद्दोषक्षयाद्व्याधिवैपरीत्येन च या रुचिः ।
तासु पथ्योपचारज्ञो योगेनाद्यं विकल्पयेत् ॥

प्रसङ्गेनेदमुच्यते . सततसेवया अनिष्टत्वेन हेतुना च यत् पथ्यं सत् द्वेष्यत्वं प्राप्तं तत् तैलेनोनादिभिः पूर्वोक्तैः संयोगसंस्कारादिभिः कल्पनाविधिभिः पुनः प्रियत्वं गमयेत् यतो मनसोऽर्थानुकूल्येन प्रियत्वेन च तुष्ट्यादयो जायन्ते . अतस्तुष्ट्यादिभिर्व्याधेः परिक्षयो भवति . तस्मात् प्रियत्वं गमयेदिति . सुखोपभोग्यता पथ्यस्यानायासेनोपयोगः . तथा लौल्यादिभिर्या रुचयो भवन्ति तासु रुचिषु पथ्यापथ्योपचारज्ञो वैद्यो योगेन तत्कालोचितेन धातुसाम्यापादनेन प्रयोगेण महाकन्दनीयमप्यपथ्यमपि कल्पयेत् . व्याधिवैपरीत्यमस्थिरत्वात्तत्र अथवा औषधयोगेन स्वल्पेन स्वल्पमपथ्यं विकल्पयेदिति .

शीतोष्णवर्षानिचितं चैत्रश्रावणकार्तिके ।
क्रमात् साधारणे श्लेष्मवातपित्तं हरेद्द्रुतम् ॥
प्रावृट्शरद्वसन्तानां मासेष्वेतेषु वा हरेत् ।
...षु विधिना त्रिमासान्तरितान्मलान् ॥
...तोष्णवृष्टीनां प्रतीकारं यथायथम् ।
क्रियां प्राप्तां क्रियाकालं न हापयेत् ।

यथासंख्येन शीतादिकालत्रयसञ्चितं श्लेष्मादिकं क्रमेण चैत्रादिषु मासेषु निर्हरेत् . शीतसञ्चितं श्लेष्माणं चैत्रे उष्णसञ्चितं वातं श्रावणे . वर्षासञ्चितं पित्तं कार्तिके इत्यर्थः अयमनियमः स्वस्थवृत्ते . आतुरवृत्ते त्वनियमप्रदर्शनार्थमाह कृत्वेत्यादि . अकालेपि रोगोत्पत्त्या प्राप्तां क्रियां योजयेत् . न तु क्रियाकालं हापयेत् . कथं योजयेदित्याह . यथायथं यथाकाले शीतादीनां कृत्रिमैर्गुणैः प्रतीकारं कृत्वा .

सप्ताहेन गुणालाभे क्रियामन्यां प्रयोजयेत् ।
पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः ॥
गुणेऽल्पेऽपि तु तामेव विशेषोत्कर्षलब्धये ।

रोगोपशमाय क्रियायां प्रयुज्यमानायां सत्यां क्रियां योग्यां प्रयोजयेत्सत्वरया . अपि तु प्रथमायां शान्तवेगायां अन्यथा क्रियासङ्करो भवति स च न हितः . यदा तु प्रथमयैव क्रियया स्वल्पो गुणो दृश्यते . तदा तामेव प्रयोजयेद्विशेषोत्कर्षलाभायेति .

भेषजं नृपतेर्हृद्यमल्पमल्पात्ययं शुचिः
शुद्धागमं बहुगुणं बहुकृत्वः प्रयोजितम्
अनन्यकार्योऽवहितः तथा तन्मान्त्रिसम्मतः ।
आस्वादितं परिचरैःस्वयञ्चानुप्रयोजयेत् ॥

राज्ञो नानाविधोपकरणसम्भवात्सुकुमारत्वात् प्राधान्याच्चेदमुच्यते . नृपतेर्हृद्यादिगुणयुक्तं भेषजं पथ्यम् . अल्पमल्पमात्रम् . अल्पात्ययं देशकालाद्यपायेपि निरपायम् . शुद्धं परिशुद्धः आगमो वणिगादिभिरहितैर्यस्य तत्तथोक्तम् . तथा राजपरिचारैरास्वादितम् . भिषजा वा स्वयमास्वादितम् . किंभूतो वैद्यस्तद्भेषजं प्रयोजयेदित्याह . शुचिरनन्यकार्यः अवहितश्च . तथा तस्य राज्ञो मन्त्रिणां सम्मतः पूजितः .

उचितो यस्य यो देशस्तज्जं ... नम
देशेऽन्यत्रापि वसतस्तत्तुल...
वीर्यवद्धारितं सम्यक्...

रसगन्धादिसंपन्नं काले जीर्णे च मात्रया ॥
एकाग्रमनसा युक्तं भेषज्यममृतायते ।

इति भेषजावचरणीयो नाम त्रयोविंशोऽध्यायः ।

अनन्तरं सामान्येनोच्यते . यस्यातुरस्य य एवोचितदेश अन्यत्तदेशः तज्जमेवौषधमन्यथापि वसतो हितम् . यदि वा तज्जमौषधं न सम्भवति तदा तेनोचितेन देशेन यत् समानगुणं देशान्तरं तज्जमौषधं हितमिति . तथा एवंविधं सत् भेषजं सर्वस्यापयोक्तुरमृतायते कीदृशमौषधमित्याह . वीर्यवदित्यादि . *वीर्यवदुत्कृष्टशक्ति . स्वरसैस्स्वजातिभिर्भिन्नातिभिर्वाऽसकृदनेकवारं भावितम्* . तथा लघु . रसादिसम्पन्नम् . आदिग्रहणेन वर्णस्पर्शपाकादीनां परिग्रहः . तथा एकाग्रमनसा अवहितमानसेन भिषजा उचिते काले जीर्णे मात्रया च प्रयुक्तमिति .

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
त्रयोविंशोऽध्यायः ॥

---

# अथ चतुर्विंशोऽध्यायः ।

---

अथातो द्विविधोपक्रमणीयमध्यायं व्याख्यास्यामः इति ह स्माहुरात्रेयादयो महर्षयः ।

उपक्रम्यस्य हि द्वित्वाद् द्विधैवोपक्रमो मतः ।
एकस्सन्तर्पणस्तत्र द्वितीयश्चापतर्पणः ॥
बृंहणो लङ्घनश्चेति तत्पर्यायावुदाहृतौ ।

पूर्वेऽध्याये व्याधिनिर्घातनमुक्तम् . अत्र तु तस्यैव द्वैविध्यप्रदर्शनार्थमध्यायारम्भः . अथात इत्यादि उपक्रमश्चिकित्सेति पर्यायौ . द्विविध एवोपक्रमः कुतः उपक्रम्यस्य व्याधितस्य सन्तर्प्योऽपतर्प्य इति द्वैध्यात् . यो हि गुर्वादिभिस्सन्तर्पणैर्व्याधितस्तस्य ल... दिभिरपतर्पणैरुपक्रमणात् . एवं ... गुर्वाद्युपक्रमात् . अत एवोपक्रमद्वैविध्यम् . तत्र योरुपक्रमयोर्मध्ये एकस्सन्तर्पणो भवत्यपरोऽपतर्पणः तयोश्च यथासङ्ख्येन बृंहणलङ्घनशब्दौ ... गमसिद्धेः .

बृंहणं यद् बृहत्त्वाय लंघनं लाघवाय यत्
देहस्य भवतः प्रायो भौमापामितरच्च ते ॥

बृंहणमित्यादिना बृंहणलङ्घनयोश्शब्दयोरन्वर्थतां वदन् सन्तर्पणापतर्पणयोस्स्वरूपं वक्ति . यद्देहस्य शरीरस्य बृहत्त्वाय कल्पते तत् बृंहणम् . तथा देहस्य यल्लाघवाय कल्पते तल्लंघनम् . ते च बृंहणलंघने भौमापमितरच्च भवतः . तेनैतदुक्तं भवति . भौमापं द्रव्यं बृंहणं मतम् . इतरदाग्नेयवाय्वाकाशात्मकं लंघनमिति .

स्नेहनं रूक्षणं कर्म स्वेदनं स्तंभनञ्च यत् ।
भूतानान्तदपि द्वैध्याद् द्वितयन्नातिवर्तते ॥

बहूपक्रमवादिनं प्रतीदमुच्यते स्नेहनमित्यादि . स्नेहनं रूक्षणञ्च यत् कर्म उपक्रमः . तथा स्वेदनं स्तम्भनञ्च यत् कर्म तत् कर्मचतुष्टयं भूतानामग्नीषोमात्मकरूपद्वैविध्यात् द्वितयं बृंहणलंघनाख्यं नातिवर्तते . तेनैतदुक्तं भवति . स्नेहनस्तम्भने सौम्यत्वात् बृंहणवर्गे पततः . रूक्षणस्वेदने चाग्नेयत्वाल्लंघन इति . शोधनाख्यस्य स्नेहस्य लंघनफलत्वाल्लंघनत्वम् . तत्कालान्तु बृंहणत्वमेव . एवं स्वेदादीनामपि विचार्यम् . तस्माद् द्वावेवोपक्रमौ .

शोधनं शमनञ्चेति द्विधा तत्रापि लंघनम् ।
यदीरयेद् बहिर्दोषान् पञ्चधा शोधनञ्च तत् ॥

निरूहो वमनं कायशिरोरेकोऽस्रविस्रुतिः ।
न शोधयति यद्दोषान् समान्नोदीरयत्यपि ॥
समीकरोति विषमान् शमनं—

तत्र लंघनं शोधनशमनभेदेन द्विविधम् । शोधनं शमनं च किमुच्यत इत्याह । यदीरयेदित्यादिना । यत्तु पश्चभिर्वमनादिभिः प्रकारैर्दोषधमन्तश्शरीरस्थान् दोषान् वातादीन् बहिरीरयेत् । तच्छोधनम् । निरूह इत्यादिना पञ्चप्रकारान्दर्शयति । निरूहो गुदमार्गेणेयमाण एव कायस्नेहादि । वमनं कायविरेकशिरोविरेक । अस्रविस्रुतिरिति । शमनं पुनर्यद्दोषधमनन्तरोक्तेन प्रकारेण दोषानाशयति । समांश्च दोषानोदीरयति नोत्क्लेशयति । विषमान् प्रवृद्धान् समीकरोति स्वरूपेण स्थापयति । तच्छमनम् । विषमशब्दस्समान् नोदीरयत्यपीति वाक्यसामर्थ्याद् वृद्धानेव वर्तते ।

—तच्च सप्तधा ।
पाचनं दीपनं क्षुत्तृड्व्यायामातपमारुताः ॥
बृंहणं शमनन्त्वेव वायोः पित्तानिलस्य च ।

तच्च शमनं सप्तभिः प्रकारैः पाचनत्वादिभिर्भवति । पाचनत्वादीनां दोषशमनत्वमुक्तम् । तच्च वायौ वातपित्ते चामीत्यभिधाय संभवतीत्याह । बृंहणमित्यादि । यद्यपि शमनं लंघनं तथापि वायौ वातपित्ते च बृंहणमेव यथोक्तलक्षणं शमनम् । पित्तस्य तु केवलस्य ... लंघनमेव शमनम् । वातश्लेष्मणोस्तु वा ... लंघनमेव केऽपि च । सुबोधम् ।

ननु च क्व बृंहणं विधेयं क्व वा लंघनमित्याह । बृंहयेदित्यादि ।

बृंहयेद् व्याधिभैषज्यमद्यस्त्रीशोककर्शितान् ।
भाराध्वोरःक्षतक्षीणरूक्षदुर्बलवातलान् ॥
गर्भिणीसूतिकाबालवृद्धान् ग्रीष्मेऽपरानपि ।
मांसक्षीरसितासर्पिर्मधुरस्निग्धवस्तिभिः ॥
स्वप्नशय्यासुखाभ्यङ्गस्नाननिर्वृतिहर्षणैः ।

व्याध्यादिकर्शितान् बृंहयेत् । ग्रीष्मकालस्य भारादिभिरसम्बन्धः । तथा ग्रीष्मे अपरान् सर्वानिव्यर्थः । केन बृंहयेदित्याह । मांसेत्यादि । इति बृंहणीयानि ।

मेहामदोषातिस्निग्धज्वरोरुस्तंभकुष्ठिनः ।
विसर्पविद्रधिप्लीहशिरःकण्ठाक्षिरोगिणः ॥
स्थूलांश्च लंघयेन्नित्यं शिशिरे त्वपरानपि ।

मेहादीन् ... नित्यमेव न तु कदाचित् । शिशिरे ... अपरानिति ... ग्रहणम् । अन्यथा ... शिशिरे हेमन्तादिरिष्यते ... । केन लंघनेनेत्याह ।

तत्र संशोधनैः स्थौल्यबलपित्तकफाधिकान् ।
आमदोषज्वरच्छर्दिरतीसारहृदामयैः ॥
विबन्धगौरवोद्गारहृल्लासादिभिरातुरान् ।
मध्यस्थौल्यादिकान् प्रायः पूर्वं पाचनदीपनैः ॥
एभिरेवामयैरार्तान् हीनस्थौल्यबलादिकान् ।
क्षुत्तृष्णानिग्रहैर्दोषैस्त्वार्तान्मध्यबलैर्दृढान् ॥
समीरणातपायासैः किमुताऽल्पबलैर्नरान् ।

तत्रेत्यादि । आमदोषादिभिर्व्याधिभिरातुरान् स्थौल्यादिभिः स्थूलत्वादिभिर्गुणैरधिकान् उत्कृष्टस्थौल्यादिकान् सतः पूर्वं प्रथमं पाचनदीपनैश्च लंघयेत् । ततो यथार्हेण लंघनेन । प्रायोग्रहणं दोषतन्त्रत्वेऽप्यथा नियमस्यासर्वविषयत्वप्रदर्शनार्थम् । तथा एभिरेवामदोषादिभिरामयैरार्तान् हीनस्थौल्यबलादिकान् सतः क्षुत्तृष्णानिग्रहैर्लंघयेत् । तथा सर्वव्याधितान् मध्यबलानपि दोषैर्नानादिभिरार्तान् समीरणादिभिर्लंघयेत् । किमुताल्पबलैर्दीर्घगन्तॄन् ।

न बृंहयेल्लंघनीयान् बृंह्यांस्तु मृदु लंघयेत् ।
युक्त्या वा देशकालादिबलतस्तानुपाचरेत् ॥

लंघनीयान् लंघनार्हान् व्याधीन् न कदाचन बृंहयेत् । यतस्ते बृंहणेन स्वल्पेनापि परं वृद्धिमाया-

तच्चेषोऽल्परसोऽल्पत्वान्नालं रक्तादिपुष्टये ।

ननु चोक्तं स्थूलो मेदोऽतिपुष्टिं यातीति . तत् कथमित्याह . कोष्ठ एवेत्यादि . अस्य स्थूलस्य मेद कार्यैः स्वदावृत्ता समृद्धेन उपलेपात्मकेन मेदसा रुद्धेषु रसवहस्रोतस्सु प्रसहमपरो कोष्ठ एव तिष्ठति सति यतस्य रसस्सर्वधातुपचयाप्रवृत्तिर्भवति . गुरुमधुरादिभिश्च मेदस्सादस्य भजते . अतोऽस्य पुरुषस्य मेद एव वर्ध्यते तेन रसेन . तथा तस्मान्मेदस्सर्वशेषोऽपि रसो रक्तादिधातुपञ्चकपुष्टये स्वल्पत्वात्तालम पर्याप्तः .

तुल्येपि वाप्यादिचये मांविचत्तं चीयतेतराम् ।
मेदस्तेनाऽसमस्तेन धातूनां विदधाति तत् ॥

श्वासादीनचिराद्यान्यान्ज्वरोदरभगन्दरान् ।
मेहोरुस्तंभपिटकाविद्रधिप्रभृतीन् गदान् ॥

ननु च कथं रसरक्ताभ्यामप्रवृद्धाभ्यां मेदसो वृद्धिः कथम मेदसि वृंहणत्वादीनि वृद्धिं यान्तीति . यत उक्तं पूर्वो धातुः परं कुर्याद् वृद्धः क्षीणश्च तद्विधमिति . तथा धात्वाहाराश्च धातव इति . तस्माद्यावत्सर्वे धातवो न क्षीणा वृद्धा वा तावदेकस्य वृद्धिश्चयौ दुरुपपादकावित्याशङ्क्यते . न ह्येष एव पक्षः यत् पूर्वधातूपमर्दनेनैव परधातुसंभवः अन्यधातूद्भवः . अपि तु युगपदपरसेन सकलधातूनां परिपोषोऽपि . तन्त्रान्तरे वक्ष्यते . तत्रैव यथोक्तं विचार्यते . भवतु नामैवम् . यत्र तु क्रमेण पूर्वधातूपमर्दनेनान्यधातूद्भवस्तत्र केवलस्य मेदसः कथं वृद्धिरत्रापि उच्यते . न हि केवलमेव मेदर्ध्यते . अपि तु रक्तादयोऽपि चीयन्त एव . मेदः पुनः पूर्वकारणबलवत्यतिशयेन वृद्धं सत् पुनरन्यधात्वपेक्षया भृशतरां वर्धेत इति . एतदेवाह . तुल्येऽपीत्यादि . अतस्तेन धातूनामसमत्वेन कारणेन मेदः स्थूलस्य श्वासादीन् जनयति .

अयथोपचयोत्साहश्चलस्फिगुदरस्तनः ।
अतिस्थूलः स्मृतो योऽयं तत्रान्नं मारुतापहम् ॥

श्लेष्ममेदोहरं यच कुलत्था यवका यवाः ।
जूर्णश्यामाकमुद्गाद्याः पानेऽरिष्टं मधूदकम् ॥
मस्तु तक्रं च तीक्ष्णोष्णं रूक्षं छेदि च भेषजम् ।
चिन्ताव्यवायव्यायामशोधनास्वपनं भजेत् ॥
देहापेक्षी तथा रूक्षं स्नानमुद्वर्तनादि च ।

अतिस्थूलः कीदृग् उच्यत इत्याह . अयथोपचयेत्यादि . उपचयेनायामसंहननेन सदृशः उत्साहो यस्य स यथोपचयोत्साहः . न यथोपचयोत्साहः अयथोपचयोत्साहः . अर्ध्वसंहार उत्साहेन तु स्तोक इत्यर्थः . चलाः स्फिगादयो यस्य स तथाविधः तादृशः पुरुषोऽतिस्थूलः स्मृतः . तत्रातिस्थूले मारुतापहमन्नं योग्यम् . तथा यवाद्यादिकं श्लेष्ममेदोहरं तत्रापि योग्यम् . तथा कुलत्थादयः . पाने अरिष्टादीनि भेषजमौषधं यत् किञ्चित् तीक्ष्णोष्णादिगुणम् . तथातिस्थूलो देहमपेक्ष्य यथोचितमिथिलाव्यायामव्यायामादीन् भजेत् . अस्वप्नमित्यादि . अतिनिद्राप्रतिषेधः. तथा रूक्षस्नानादीन्यपि भजेत् .

मधुना त्रिफलां लिह्यात् गुडूचीमभयां घनम् ।
रसाञ्जनस्य महतः पञ्चमूलस्य गुग्गुलोः ॥

शिलाह्वस्य प्रयोगश्च साग्निमन्थरसो हितः ।
विडङ्गं नागरं क्षारः काललोहरजो मधु ॥

यवामलकचूर्णं च योगोऽतिस्थौल्यदोषजित् ।
मदनं त्रिफला मुस्ता सप्ताह्वारिष्टवत्सकम् ॥

सपाठारग्वधं पीतमतिबृंहणरोगजित् ।
तद्वद्वत्सकशम्याकदेवदारुनिशाद्वयम् ॥

समुस्तपाठाखदिरत्रिफलानिम्बगोक्षुरम् ।
मदनादीनि चालेपः स्नानादिष्वपि योजयेत् ॥
हिङ्गुगोमेदकव्योषकुष्ठक्रौञ्चास्थिगोक्षुरम् ।
एलाह्वक्षकपद्मन्याखराश्मोपलभेदकम् ॥
तक्रेण दधिमण्डेन पीतं कोलरसेन वा ।
मूत्रकृच्छ्रं कृमीन् मेहं स्थूलतां च व्यपोहति ॥

तथा त्रिफलागुडूच्यादीनामन्यतमं मधुना लिह्यात् . तथा रसाञ्जनादयश्च प्रयोग अग्निमन्थरससहितोऽतिस्थूले हितः . बिल्वादियोगः सर्वसमभागोऽतिस्थौल्यदोषजित् . मदनाद्यौषधदशकं समभागं जलेन पीतमतिबृंहणोद्भवान् रोगानाशु शमयति . वत्सकादि गोक्षुरकान्त तद्वन्मदनादिदशकवदतिबृंहणरोगजित् . तथा मदनादीन्यनन्तरपठितानि कषायादिना स्नानानुलेपोद्घर्षणादिष्वपि योजयेत् . तथा हिङ्ग्वादयुपलभेदान्तं तक्रादीनामन्यतमेन पीतं मूत्रकृच्छ्रादीनपोहति .

कृमिघ्नत्रिफलं तैलसक्तुच्यूषणदीप्यकैः ।
लोहोदकाप्लुतो मन्थः शस्तो बृंहणरोगिणाम् ॥
व्योषकट्वीवराशिग्रुबिल्वङ्गातिविषास्थिराः ।
हिङ्गुसौवर्चलाजाजीयवानीधान्यचित्रकाः ॥
निशे बृहत्यौ हपुषा पाठामूलं च केबुकात् ।
एषां चूर्णं मधुघृतं तैलं च सदृशांशकम् ॥
सक्तुभिः षोडशगुणैर्युक्तं पीतं निहन्ति तत् ।
अतिस्थौल्यादिकान् सर्वान्
रोगानन्यांश्च तद्विधान् ।
हृद्रोगकामिलाश्वित्र-
श्वासकासगलग्रहान् ॥
बुद्धिमेधास्मृतिकरं सन्नस्याग्नेश्च दीपनम् ।
योज्यंतथायथाव्याधिस्वेदास्रस्रावणान्यपि ॥

तथा कृमिघ्नादीषधदशकेन समभागेन कृतो लोहोदकेन शस्त्रभाजनोषितपानीयेनाप्लुतो मन्थोऽतिबृंहणोत्थरोगाणां पथ्यः . व्योषादीन्यौषधानि चतुर्विंशतिः परस्परसमभागानीत्ययमेको भागः . तत्समो मधुनो द्वितीयः , घृतस्य तृतीयः . तैलस्य चतुर्थः , एषां चतुर्णां भागानां मिश्रीभूतानां षोडशगुणा यवसक्तवः . अयं मन्थःपीतः सन् अतिस्थौल्यादिकान्यथापठितान् सर्वान् रोगान् निहन्ति , अन्यांश्च तद्विधान् बृंहणोत्थानित्यर्थः . तथा हृद्रोगादीन् निहन्ति , बुद्ध्यादिकरः . सन्नस्याग्नेर्दीपन इति . तथा तेषु बृंहणोत्थेषु रोगेषु यथाव्याधि व्याधेः सात्म्येन क्रमेण [illegible] योज्यम् .

अतिकार्श्ये भ्रमः [illegible]
स्नेहाग्निनिद्रादृक्श्रोत्रशुक्रौजःक्षुत्स्वरक्षयः
वस्तिहृन्मूर्द्धजंघोरुत्रिकपार्श्वरुजा ज्वरः
मलापोर्ध्वानिलग्लानिः ष्ठ [illegible]
वर्चोमूत्रग्रहाद्याश्च जायन्तेऽतिविलंघनात्
अतिकार्श्येन नायासवर्षशीतोष्णतृट्क्षुधः ।
तृतिव्याध्यौषधमदान् सहतेऽल्पबलत्वतः
श्वासकासक्षयप्लीहगुल्मार्शोवह्निमन्दताः
कृशं प्रायश्च धावन्ति रक्तपित्तानिलामयाः

अतिलंघनोत्था अतिकार्श्यादयो वक्ष्यन्त [illegible] भ्यते . अतिकार्श्यमित्यादि . स्नेहादीनां [illegible] समासः . वस्त्यादीनां रुजाशब्देन [illegible] आदिग्रहणेन न्यनाधिधानां वातजानां रोगाणां ग्रहणम् एते ह्यतिकार्श्यादयोऽतिलंघनाज्जायन्ते . तत्र [illegible] प्राधान्यात् पृथगुक्तिः . एतेनातिकार्श्येन हेतुना स्वबलत्वं ततोऽल्पबलत्वतो हेतोरायासादीन् पुरुषो न हते . मदशब्दस्य व्याध्यौषधाभ्यां समासः . कृशं पुरुषं श्वासादयोऽन्ये च रक्तपित्तानिलजा धावन्ति . तमतिकृशमायान्तीत्यर्थः .

कार्श्यमेव वरं स्थौल्यान्न हि स्थूलस्य [illegible]
बृंहणं लंघनन्नालमतिमेदोऽग्निवातजित् ॥
मधुरास्निग्धसौहित्यैर्यत् सौख्येन च नश्यति ।
क्रशिमा स्थविमात्यन्तविपरीतनिषेवणैः ॥

यद्यप्ययं कार्श्याख्यो महान् रोगस्तथाप्यतिस्थौल्यात् कार्श्यमेव वरं कृत एवमित्याह . न हीत्यादि . अतिस्थूलस्य हि भेषजमतिमेदसोऽग्नेर्वायोश्च नाशन यत्तत् साधु . तथाविधं चातिमेदोऽग्निवातजिद् भेषजमतिस्थूलसाधनञ्च बृंहणं पर्याप्तमपि लंघनम् . तेनैतदुक्तं भवति . अतिस्थूलाय यदि बृंहणं दीयते तदग्निवातजिद्भवति .

र्देष्टुमशक्यम् । केवलं स्वास्थ्यमात्रेणानुमानतो लक्षयेदिति ॥

धन्वन्तरीयाः सौश्रुताः । सर्वेषाम् । दोषादीनामुच्यवरिथतरूपत्वात् दुःशेनं प्रमाणम् । केवलं स्वास्थ्यमात्रेणानुमानाल्लक्षयेदिति ।

सर्व एव त्ववयवाः परमाणुभेदेनातिसौक्ष्म्यादसंख्येयतां यान्ति । तेषां संयोगविभागे परमाणूनां कर्मप्रेरितो वायुः कारणम् ।

इदं च विजेयम् । स्थूलया दृष्ट्या अङ्गप्रत्यङ्गानां सङ्ख्यादिकमुक्तम् । सर्वे एवावयवाः परमाणुभेदेन स्वातिसौक्ष्म्याद्धेतोरसंख्येयतां यान्ति । ते च परमाणवः प्रतिक्षणं सजातीयविजातीयसंयोगविभागाभ्यां शरीरभावेन वर्तन्ते । अन्यथा यो वा बाल्ये आसीत् स एव युवत्वं प्रतिपन्न इत्येकस्यापि नानात्वयोगात् । तेषां परमाणूनां संयोगविभागे दैवपौरुषकर्मप्रेरितो वायुस्तत्क्रियत्वात् कारणम् । प्रथविस्तरभयात्तदुत्पत्तिर्न दर्श्यते । केवलमेतावदिज्ञेयम् । कर्मचोदितवायुवशात् संयुक्ताः परमाणवः कार्यद्रव्यमारभन्ते द्व्यणुकादिक्रमेण । वायुकारणादेव च परमाणूनां विभागात् संयोगविनाशेन कार्यद्रव्यविशेषः ।

तदेतदङ्गभेदेन भेदतश्च गृह्यमाणं बन्धाय मोक्षाय च भवतीति । भवति चात्र ॥

अत उपसंहरति । तदेतदनुक्तान्तरूपमङ्गं शरीरमभेदेनैकत्वेन आश्रयमाणं रामणीयत्वादुपादेयत्वेन बन्धाय जन्ममरणप्रवृत्तिपरम्पराप्रवृत्तये भवति । तदेतदानन्तर्येणानेन प्रकारेण भेदेन आश्रयमाणं निरसारं जगुप्सितवस्तुसमारब्धत्वेन हेतुना मोक्षाय रागादिनिमित्तक्रियाकलापपरिहाराद्भवति । भवति चात्रेति श्लोकेनोपसंहारे तन्त्रनीतिः ।

इति सर्वावयवज्ञो यो जानाति कलेवरम् । अहितेषु स मोहेन न कदाचित् प्रवर्तते ॥

इत्यङ्गविभागो नाम पञ्चमोऽध्यायः ॥

इत्यनेन प्रकारेण सर्वावयवज्ञः सर्वमवयवं यः पुरुषः कलेवरं शरीरं जानाति सोऽहितेषूभयलोकविरुद्धेषु मोहान्न प्रवर्तते । गृहीतवस्तुतत्त्वः सर्वाहितानि परित्यज्य हितेष्वेव प्रवर्तत इत्यर्थः ।

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां पञ्चमोऽध्यायः ॥

---

# अथ षष्ठोऽध्यायः ।

---

पूर्वाध्याये शरीरावयवभेदे स्वल्पाभिधानत्वात् सिरादिनिर्णीतिशेषत्वात्रापि सिराणां प्राधान्याद्विनिर्णयार्थमध्यायारम्भः ।

अथातः सिराविभागमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

दश मूलसिरा हृदयमभिवद्धाः सर्वाङ्गप्रत्यङ्गेष्वोजो नयन्ति । तत्प्रतिबद्धा हि शरीरचेष्टाः । तास्तु व्यङ्गुलमङ्गुलमर्धाङ्गुलं यवं यवार्धं च गत्वा द्रुमपत्रसेवनीमतानवच्छिद्यमानाः सप्तशतानि भवन्ति ।

दश मूलसिरा इत्यादि । मूलसिराः प्रधानसिराः । ततो हि सर्वाः सिरा भवन्ति । ता ...

षु प्रत्यङ्गेषु चोर्ध्वं नयन्ति . ताः प्रविभज्यमानाः द्रुमपत्ररेखाप्रतानवत् सप्तशतानि सिराणां भवन्ति . तन्त्रान्तरेऽप्युक्तं भवति . ता हृदयप्रतिबद्धा दश सिरा हृदयादङ्गुलं गत्वा प्रथमं प्रतानं मुञ्चन्ति . तत्र अङ्गुलं गत्वा द्वितीयम् . तत्र अर्धाङ्गुलं गत्वा तृतीयम् . ततो यव गत्वा चतुर्थम् . ततोऽपि यवार्धं गत्वा पञ्चममिति . ततो न भिद्यन्ते . सर्वेषु चैव भिद्यमाना इति योज्य यावदङ्गेऽपि . सप्तशतानि प्रतानानां दीर्घाणां भवन्ति

तासां चतुश्शती शाखासु । तत्र षोडशाव्यधनीयाः । षट्त्रिंशं शतमन्तराधौ । तत्र द्वात्रिंशत् । चतुष्षष्ट्यधिकं शतमूर्ध्वम् । तत्रापि पञ्चाशत् ॥

तान्यश्चत्वारि शतानि चतसृषु शाखासु . तत्रा-पि चतुश्शत्यां षोडशाव्यधनीयाः . अन्तराधौ तु षट्त्रिंशच्छतम् . तत्र द्वात्रिंशदव्यधनीया इति सम्बन्धः .

तासामेकैकस्मिन् सक्थ्नि शतम् । तत्र न विध्येज्जालन्धराम् । तिस्रश्चाभ्यन्तरगताः ॥

तत्र षोडश शाखासु अव्यधनीया उक्ता इत्ये-का पूर्वोक्ता जालन्धरा . तिस्रश्चाभ्यन्तरसमाश्रया ऊर्वीयाः .

द्वात्रिंशच्छ्रोण्यां गुदमेढ्राश्रयाः । तासां द्वे द्वे वंक्षणयोः कटीकतरुणयोश्चैव ग्रौ शश्वतो रक्षेत् । षोडश पार्श्वयोः तयोरूर्ध्वगामेकैकां पार्श्वसन्धिसंज्ञाम् । चतुर्विंशतिः पृष्ठे । तासां पृष्ठवंशमुभयतो द्वे द्वे ऊर्ध्वगामिन्यौ ताश्चतस्रः । चतुर्विंशतिरुदरे । तासां मेढ्रस्योपरि रोमराजीमुभयतो द्वे द्वे ता अपि चतस्रः ।

चत्वारिंशद्वक्षसि । तासां द्वे हृदये द्वे द्वे च स्तनमूलस्तनरोहितेषु । एकैकापस्तंभापालापेष्विति । ताश्चतुर्दश ॥

आग्रीवामूलादाश्रोणिमध्यमन्तराधिः . तत्र षट्त्रिंशच्छतं सिराणाम् । तद्यथा . द्वात्रिंशत् श्रोण्याम् . पार्श्वयोर्द्वयोः षोडश . पृष्ठे चतुर्विंशतिः . उदरे चतुर्विंशतिरुरसि चत्वारिंशदिति षट्त्रिंशच्छतमन्तराधौ सिराणाम् . तत्र द्वात्रिंशदव्यधनीया इति यदुक्तं तत्प्रदर्शितं . अष्टौ श्रोण्याम् . वंक्षण उभयत्र चतस्रः . कटीकतरुणास्थ्योरुभयोश्चतस्र इत्यष्टौ . पार्श्वयोर्द्वे . द्वयोः पार्श्वयोरेकैकामूर्ध्वगाम् . पृष्ठे चतस्रः पृष्ठवंशस्यैकस्मिन् पार्श्वे ऊर्ध्वगामिन्यौ द्वे अपरस्मिंश्च द्वे इति . जठरे चतस्रः रोमराज्याः पार्श्वयोर्द्वयोर्द्वे द्वे इति . उरसि चतुर्दश . तत्र द्वे हृदये . द्वे द्वे द्वयोस्तनमूलयोः . इति चतस्रः . स्तनरोहितयोश्चतस्रः . अपस्तम्भयोरेकैकां तथापालापयोरपि . एवं द्वात्रिंशदन्तराधावव्यधनीयाः .

चतुर्विंशतिर्ग्रीवायाम् । तासां चतस्रोऽष्टौ च मर्मसंज्ञाः । द्वे कृकाटिकयोर्द्वे विधुरयोरिति षोडश शस्त्रेण न स्पृशेत् । हन्वोः षोडश तासां सन्धिसंबन्धिन्यौ द्वे । षोडश जिह्वायाम् । तासामधो द्वे रसवेदिन्यौ द्वे वाक्प्रवर्तिन्यौ ताश्चतस्रः । चतुर्विंशतिर्नासायाम् । तासां द्वे गन्धवेदिन्यौ तासामेव च तालुन्येकामिति तिस्रः । षट्पञ्चाशन्नेत्रयोः । तयोरुन्मेषनिमेषक्रिये द्वे द्वे चापाङ्गयोरिति षट् । नासानेत्रगतास्तु ललाटे षष्टिः । तासां केशान्तानुगताश्चतस्रो द्वे चावर्तयोरेका च स्थपन्यामिति सप्त । कर्णयोः षोडश । तासां शब्दवाहिन्यौ द्वे । त एव च

शंखयोस्तासां शंखसन्धिगते द्वे । द्वादश मूर्धनि । तासामुत्क्षेपयोर्द्वे सीमन्तेष्वेकैकामेकामधिपतावित्यष्टौ शस्त्रेण परिहरेत् । तथा क्षुद्रिकाः कुटिलाः संकीर्णा ग्रथिताः सन्धिषु चाशस्त्रकृत्याः ॥

चतुष्षष्ट्यधिकं शतमूर्ध्वं शिरसि सिराणामिति यदुक्तं तद्विभजते . ग्रीवाया चतुर्विंशतिः . हन्वोर्द्वयोः षोडश . षोडश जिह्वायाम् . नासाया चतुर्विंशतिः . नेत्रयोः षट्पञ्चाशत् . ललाटे षष्टिर्नासानेत्राश्रितास्ताभ्योऽन्या अतो न गण्यन्ते . कर्णयोर्द्वयोः षोडश सिरास्ता एव शंखाश्रिता अनस्तदन्या न गण्यन्ते . मूर्ध्नि द्वादशेति चतुष्षष्ट्यधिकं शतम् . अत्र पञ्चाशदव्यधनीया इति यदुक्तं तदुच्यते . ग्रीवायां षोडश . चतस्रो मर्मसंज्ञाः द्वे नीले द्वे मन्ये इति चतस्रः . अष्टौ मर्मसंज्ञाः मातृका इति वक्ष्यमाणाः द्वे द्वयोः कृकाटिकयोः द्वे च विधुरयोरिति . षोडश हन्वोर्द्वयोः . द्वे हनुसन्धिबन्धनकर्मणी . जिह्वायां चतस्रः . द्वे रसबोधने जिह्वाया अधस्तथा द्वे वाक्प्रवर्तिन्यौ इति चतस्रः . नासाया तिस्रो यत्र द्वे गन्धवेदिन्यावेका च तालुनीति तिस्रः . नेत्रयोः षट् निमेषे द्वे उन्मेषे द्वे अपाङ्गयोर्द्वे इति षट् . ललाटे सप्त केशान्तकाश्चतस्रः . आवर्तकाख्ययोर्मर्मणोर्द्वे एका च भ्रूमध्यगते स्थपन्याख्यमर्मणि इति सप्त . कर्णयोश्चतस्रः द्वे शब्दवाहिन्यौ शंखयोस्तत्सन्धिगते द्वे इति चतस्रः . केशान्तेऽष्टौ द्वयोरुत्क्षेपयोर्द्वे सीमन्तेषु पञ्च अधिपतौ रोमावर्तमर्मण्येका इत्यष्टौ . एवं शिरसि पञ्चाशदेवैताः . न केवलमेता एवान्येऽपि यावत् क्षुद्रिकाः अतिसूक्ष्माः कुटिला अनृजुगामिन्यः संकीर्णाः बहुभिरनभिव्यक्ताः ग्रथिताः संकोचेन ग्रन्थिरूपाः तथा सन्धिषु कूर्परादिष्वाश्रिताः .

तासां यथास्वं तुर्यांशविभागेन पञ्चसप्तत्यधिकं शतमानिलरक्तं वहति । एष विभागः पित्तश्लेष्मशुद्धरक्तेष्वपि । स्थिता ह्येवं देहमनुगृह्णन्ति दोषाः । व्यत्ययेन तु पीडयन्ति ॥

तासां च सप्तानां शतानां यथास्वं शताद्विगतसिराणां चतुर्थेन विभागेन प्रत्येकं पञ्चसप्तत्यधिकं वातादिमिश्रं रक्तं शुद्धं च वहति . तेन पञ्चसप्तत्यधिकं शतं सिराणां वातरक्तं वहति तद्वत् पित्तरक्तं, श्लेष्मरक्तं, शुद्धरक्तं च . एवमनेन सिरावहनानियमेन व्यवस्थिता दोषाः शरीरमनुगृह्णन्ति . एतद्विपर्यये पीडयन्ति .

ननु कथमेतद् ज्ञायत इमाः सिरा इदं वहन्तीत्याह .

तत्र श्यावारुणाः प्रस्पन्दिन्यः सूक्ष्माः क्षणपूर्णरिक्ता वातरक्तं वहन्ति । नीलपीतासिताः स्पर्शोष्णाः क्षिप्रस्राविण्यः पित्तरक्तम् । गौर्यः स्निग्धाः स्थिराः शीताः कण्डूमत्यः कफरक्तम् । लक्षणसंकरे संसर्गसान्निपातरक्तम् । समा गूढा स्निग्धा रोहिण्यः शुद्धरक्तमिति ॥

तत्रेत्यादि . सुबोधम् . क्षणेन पूर्णा आध्माताः क्षणेन च रिक्ताः क्षिप्र शीघ्रमेव वहन्ति स्रवन्ति . संसर्गे किं लक्षणमित्याह . अथ तु यदि दोषान्तरेण संसृष्टो भवति तदा यथास्व लक्षणानां संकरो विज्ञेयः . रोहिण्यो लोहिताः . इति सिरा उक्ताः .

क्रमप्राप्ता धमन्य उच्यन्ते .

धमन्यस्तु चतुर्विंशतिः । ताभिः कायोऽयमाराम इव जलहारिणीभिः केदार इव कुल्याभिरुपास्निह्यते । ताभिश्च ना-

भिश्चक्रनाभिरारकैरिवावृता । तस्याश्चा-भ्यां विशेषेण प्राणा व्यवस्थिताः । य-तश्च सान्तरग्न्यधिष्ठानम् ।

धमन्यो विशिष्टा सिरा एव । ताश्च संख्यया चतुर्विंशतिः । यथा आरामा जलहारिणीभिः के-दारः कुल्याभिराप्याय्यते तद्वत्ताभिर्नाभिप्रतिबद्धाभिः काय आप्याय्यते । चक्रस्य नाभिरक्षः । आराञ्नाभिबद्धा-नि काष्ठानि । सुबोधम् । यतश्च सा नाभिरन्तरग्नेर-धिष्ठानमतोऽपि तस्यां विशेषेण प्राणा व्यवस्थिताः ।

तासां खलु धमनीनां दशोर्ध्वं प्रसृ-ता दशाधश्चतस्रस्तिर्यक् । ततस्ताभिर्यथा-स्वमङ्गावयवा धार्यन्ते आप्याय्यन्ते च ॥

तासां च नाभिप्रतिबद्धानां मध्याद्दश धमन्य ऊ-र्ध्वमुपरिकाय गताः । दशाधः प्रसृताः । तिर्यक् चतस्रः ।

तासामूर्ध्वगा हृदयमभिप्रपन्नाः प्र-त्येकं त्रिधा जायन्ते । ततस्त्रिंशतो म-ध्ये द्वे द्वे वातपित्तकफरक्तरसान् वहतः । अष्टाभिः शब्दरूपरसगन्धा गृह्यन्ते । द्वा-भ्यां द्वाभ्यां भाषते घोषं करोति स्व-पिति प्रतिबुध्यते च । द्वे चाश्रु वह-तः । द्वे च स्तनाश्रिते नार्याः स्तन्यं नरस्य शुक्रम् ॥

ताश्च दश हृदयं प्राप्य प्रत्येकं त्रिधा भिन्नास्त्रिं-शत् संपन्नाः । तस्याश्च त्रिंशतो द्वे द्वे वातादीन् प-ञ्च वहतः । एवं ता दश । शब्दादींश्चतुरः अष्टा-भिः पुरुषो गृह्णाति ताभिर्हि चित्तस्थान शब्दादीनि या-न्ति । भाषणादिक्रियाचतुष्टयं द्वाभ्यां द्वाभ्यां करोति । एवं ता अष्टौ । घोषः शब्दो व्यक्तः । द्वे अश्रु वहतः । द्वे च स्तनाश्रिते नार्याः स्तन्यं वहतः । नरस्य तु ते एव शुक्रम् । एवं त्रिंशत् ।

अधोगमाः पक्वाशयस्था एवं त्रि-धा जायन्ते । तत्र दशाद्याः पूर्ववत् । द्वे वहतोऽन्नं मात्राश्रयेण । द्वे तोयम् । द्वे मूत्रम् । द्वे शुक्रं वहतो द्वे च मु-ञ्चतः । ते एव नारीणामार्तवम् । द्वे वर्चोनिरसिन्यौ स्थूलान्त्रप्रतिबद्धे । एवं द्वादश । शेषास्त्वष्टौ धमन्यस्तिरश्चीनाः स्वेदमभितर्पयन्ति ॥

याम्तु नाभेरधोगमा दश धमन्यस्ताः पक्वाशय एव त्रिधाभवन्ति । तस्याश्च त्रिंशतो दश पूर्ववत् । द्वे द्वे पञ्च वातादीन् वहन्त्यधोगाः । द्वे मात्राश्रयेणान्नं व-हतः । मात्रामन्नमाश्रित्यप्रतिनियमप्रदर्शनार्थम् । द्वे तोयं द्वे मूत्रं वहतः । द्वे पुरुषस्य शुक्रं देहे वह-तः । द्वे च शुक्रं बहिर्मुञ्चतः । ते एव पुरुषस्य शुक्रं ते एव स्त्रिया रक्तम् । इति चतस्रः । द्वे च स्थूलान्त्रप्रतिबद्धे वर्चोनिरसनकर्मणी । अष्टौ शेषा या अधोगमा अपि मनाक् तिर्यग्गतास्ताः स्वेदमभित-र्पयन्ति । एवं नाभेरधस्त्रिंशत् ।

तिर्यग्गामिन्यश्चतस्रो भिद्यमानाः सु-बहुधा भवन्तीत्युक्तं प्राक् ॥

तिर्यग्गामिन्यश्चतस्रो या नाभेः पार्श्वाभ्यां द्वे द्वे वर्तन्ते ता भिद्यमानाः सत्यो बहुधा भवन्ति । एतच्चो-क्तं प्रागङ्गविभागे । ताभिरिदं प्रकरणम् । इति धमन्य उक्ताः ।

स्रोतांसि व्याख्यास्यन्ते ।

स्रोतांसि पुंसां नव कर्णौ नेत्रे ना-सापुटौ मुखं पायुर्मूत्रपथोऽन्यानि च त्री-

णि स्त्रीणां स्तनौ रक्तपथश्च । तथापराण्यन्तस्स्रोतांसि जीवितायतनानि त्रयोदश प्राणोदकान्नधातुमलानामयनानि ॥

स्रोतांसि छिद्राणि पुंसां नव द्वे द्वे द्वे एकमेकमेकमिति च . इति मेढ्रपुंसयोः साधारणानि . स्त्रीणां तु त्रीण्यधिकानि द्वे स्तनयोर्मार्गौ एकं च रक्तपथ इति बाह्यानि स्रोतांसि . आन्तराणि त्रयोदश जीवितस्यायतनानि स्थानानि प्राणादीनां पवनानामयनानि मार्गाः .

तत्र प्राणादीनां हृदयं मूलं महास्रोतश्च । तानि धातुक्षयरौक्ष्यपिपासाक्षुद्व्यायामवेगधारणादिभिर्दुष्यन्ति । ततोऽतिसृष्टं प्रतिबद्धमल्पाल्पमभीक्ष्णं वा सशब्दशूलमुच्छ्वसनम् । तत्र श्वासवत् साधनम् ॥

तत्रैव निर्धारणे . प्राणवाहिनां हृदयं मूलं महास्रोतश्च . तानि च धातुक्षयादिभिर्दुष्यन्ति . ततः कारणादतिसृष्टं प्रतिबद्धं मोच्छ्वसनं भवति . श्वासरोगेऽत्यादिमार्गं दीर्घश्च भवति . अल्पाल्पं स्तोकमुच्छ्वसनम् . अभीक्ष्णं वारंवारम् . तत्र दुष्टेषु प्राणवाहिषु स्रोतस्सु श्वासोक्तं चिकित्सितम् .

उदकवाहिनां तालुमूलं क्लोम च । तान्यामभयातिपानौष्ण्यशुष्कान्नकषायतृणानिग्रहादिभिर्दुष्यन्ति । ततोऽतितृष्णा मुखशोषः कर्णक्ष्वेलनं तमोदर्शनं च । तत्र तृष्णोक्तमौषधम् ।

उदकवाहिनां स्रोतसां तालुक्लोमनी मूलम् . तेषाममीभिः भयादिभिर्दूषणम् . दुष्टत्वाच्चातितृष्णाद्युत्पत्तिः . तत्र तृष्णोक्ता चिकित्सा . अतिपानं मद्यस्य . उष्णशुष्काभ्यामन्नस्य सम्बन्धः . तृष्णाभिग्रहस्तृष्णावेगनिरोधः . आदिग्रहणेनैवंप्रकाराणामन्येषामप्युदकस्रोतःप्रकोपकराणामाहारविहारादीनां ग्रहणम् . क्ष्वेलनं नादः . तमस इव दर्शनं तमोदर्शनमप्रतिपत्तिः .

अन्नवाहिनामामाशयो मूलं वामपार्श्वं च । तेषां दुष्टौ सर्वं मात्राशितीयोक्तमवगच्छेत् ॥

अन्नवाहिनां स्रोतसां दुष्टत्वे हेतु कार्यं प्रतीकारं च सर्वं सानु मात्राशितीयमध्यायमवगच्छेत् . तेनैतद्गतं भवति . अन्नवाहिनामतिमात्रसमशनादीनि दूषणानि . दुष्टत्वे विषूचिकाद्युत्पत्तिः . वमनादिका चिकित्सा . शेषं सुबोधम् . मूलमाश्रयः . उपकारापकारद्वारमित्यर्थः . एवं प्राणोदकान्नसप्तधातुमूत्रशकृत्स्वेदभेदेन त्रयोदशविधानि स्रोतांसि . तत्र प्राणोदकान्नवाहिनां दुष्टौ हेतुलक्षणौषधान्युक्तानि .

रसवाहिनां हृदयं मूलं दश धमन्यश्च । रक्तवाहिनां यकृत् प्लीहा च । मांसवाहिनां स्नावानि त्वक् च । मेदोवाहिनां वृक्कौ मांसं च । अस्थिवाहिनां जघनं मेदश्च । मज्जवाहिनां पर्वाण्यस्थीनि च । शुक्रवाहिनां स्तनौ मुष्कौ मज्जा च । मूत्रवाहिनां वस्तिर्वङ्क्षणौ च । शकृद्वाहिनां पक्वाशयः स्थूलान्त्रं च । स्वेदवाहिनां मेदो रोमकूपाश्च । तेषां दूषणं विविधमहिताहारविहारमुपद्रवान् पृथक् पृथक् साधनं दोषादिविज्ञानीयाद्यथास्वं वृद्धिक्षयलक्षणेन लक्षयेत् ॥

तेषां रसवाहादीनां स्रोतसां नानाप्रकारमहिताहार दूषणम् . तच्च तीक्ष्णमतिना परिकल्पनीयम् . दुष्टा-

नामुपलब्ध्वा व्याधयस्तच्चिकित्सा च । दोषादिविज्ञानार्थोक्तेन "रसोऽपि श्लेष्मव" दित्यादिना वृद्धिक्षयलक्षणेन लक्षयेत् । ननैतदुक्तं भवति । आहारादिविशेषवशात्क्रमवाहिषु दुष्टेषु कदाचिदक्रमवृद्धिजा रोगास्तत्र यथास्वं चिकित्सेति । एवं सर्वत्रापि वाच्यम् ।

व्यधे तु स्रोतसां भ्रममोहकम्पमलापाध्मानशूलारुचितृट्छर्दिज्वरातिरुधिरस्रुतिमूत्रपुरीषरोधा मरणं च । तस्मात्स्रोतोविद्धं प्रत्याख्यायोपाचरेत् । उद्धृतशल्यं च सद्योव्रणविधानेन ॥

अनन्तरोक्तानां च स्रोतसां व्यधे शस्त्रादिनाऽन्तर्भ्रममापुर्म्रियरस्मादित्य. स्रोतोविद्धं चिकित्सायां प्रत्याख्यान कृत्वा अमरायनमुक्त्वा दैवात् किंचित् भवेदिति शास्त्रानुगमनेनोपाचरेत् । अन्तश्शल्यं च स्रोतोविद्धं शल्यमुद्धृत्योपाचरेदिति सम्बन्धः । केनेत्याह । वक्ष्यमाणेन सद्योव्रणविधानेन ।

तत्र स्रोतसामेव विशेषाः सिराधमन्यः । अन्ये त्वन्यत्वमिच्छन्ति सिराधमनीस्रोतसाम् । केवलं परस्परसन्निकर्षात् सदृशकर्मत्वात् सौक्ष्म्याच्च विभक्तकर्मणामप्यविभाग इव लक्ष्यते ॥

सिराधमन्यः स्रोतोविशेषाः स्रोतस्त्वसामान्यात् । अन्ये त्वाचार्याः सिरादीनां पृथक्त्वमिच्छन्त्येवं च ब्रुवते । यत् सिरादीनां परस्परविलक्षणानामविभाग इव लक्ष्यते तत् केवलं परस्परसन्निकर्षादिना हेतुत्रितयेन । सदृशं कर्म ग्राहकत्वं येषां ते तथोक्ताः । सौक्ष्म्यं सूक्ष्मता ।

अपरे पुनराहुः । स्रोतांसि सिराधमन्यो रसवाहिन्यो नाड्यः पन्थानोऽयनानि मार्गाः शरीरच्छिद्राणि संवृतासंवृतानि स्थानान्याशयाः क्षया निकेताश्चेति शरीरे धात्ववकाशानां लक्ष्यालक्ष्याणां नामानीति ॥

अपरे पुनराचार्या एवमाहुः । यथा स्रोतसां शरीरधात्ववकाशानां केषांचिल्लक्ष्याणामिन्द्रियगोचराणां केषांचिदलक्ष्याणामागमानुमानैकगम्यानामेतानि नामानीति ।

न चावकाशाः प्रकुपिताः स्थानस्थान्मार्गस्थांश्च धातून् प्रकोपयन्ति । तेऽपि कुपितास्तानि स्रोतांसि स्रोतांसि च स्रोतांसि धातवश्च धातून् । तेषां सर्वेषामेव दूषयितारो दुष्टा दोषाः । ते च प्रायशो दुष्यन्त्यग्निदोषात् । तस्मात्तन्निमित्तान्यायुरारोग्यबलोपचयवर्णौजांसि । तत्प्रतिबद्धान्येव च रसकादीनि भूताग्नयो धात्वग्नयश्च । तथान्नमपि तेनैव पक्वममृततां यात्यपक्वं च विषताम् ॥

स्रोतोदुष्ट्या धातुदूषणं धातुदुष्ट्या स्रोतोदूषणं चाह न इत्यादिना । प्रकुपिता दुष्टाः स्थानमार्गयस्तत्र तिष्ठन्तीति स्थानस्थाः स्रोतांसि च स्रोतांसीति यानि स्रोतांसि दुष्टानि भवन्ति तान्यन्यान्यपि दूषयन्ति । एवं धातूनामपि वाच्यम् । तेषां सर्वेषां धातूनां धात्वाशयानां च दूषकत्वे वातादीनन्तरेण नान्यो दुष्टौ कारणम् । दोषाणां दुष्टिरपि प्रायोऽग्निदोषात् । अन्यत्सुबोधम् ।

तत्र पित्तविशेषः पाचकसंज्ञोऽग्निरिति प्रागभिहितः । अन्ये पुनराचक्षते दोषधातुमलसन्निपातजनितोऽन्तरूष्मा यथानिर्दिष्टाधिष्ठानकर्माग्निरिति ॥

एवमनन्तरोक्तेन प्रकारेण पक्वादन्नात् द्वौ राशी भवतः किट्टं सारश्च । यथा नानाप्रकारोपयोगार्हाद् घृतात् स्नेहः कल्कश्च । ताभ्यां सारमलाभ्यां तदात्मकानां सारमलस्वभावानां धात्वाख्यानां शरीरगुणानां रक्तादीनां मूत्रादीनां च पारम्पर्येण क्रमप्राप्त्यानिच्छिन्नप्रवाहं कृत्वा स्रोतांस्यापूर्यन्ते । तेभ्यो यथास्वं धातवः पुष्यन्ति । पूर्वस्य रक्तादेर्धातोरुत्तरधातुप्रवेशेऽपि मांसादिभावगमनेऽपि न पूर्वेषां रक्तादिस्रोतसामपचयो भवति । किंभूतानां पूर्वधातुस्रोतसाम् । यथाकालं कालाविच्छेदेन सम्यगाहारोपयोगेनाप्याय्यमानानाम् । किंभूतेनाहारोपयोगेनाह । परिणामवता । तेनैतदुक्तं भवति । सदैवाविच्छेदेन स्रोतांसि परिणतोऽन्नसारो याति । पूर्वस्य पूर्वाण्यापूर्यन्ते । अतस्तेषामनपचयः । तथा परिणामेन च धात्वाख्या देहधारणाः प्रसादाश्च मलाश्च यथाशरीरानतिक्रमेण स्व [illegible] प्रमाणमञ्जल्यादिनिर्देशेनोक्तं नातिवर्तन्ते । प्रसादाः सारा रक्तमांसकण्डरादीनि । मलाः किट्टं कफलसीकापित्तादि । यथोऽनतिक्रमेणेति बालस्य प्रवृद्धस्य चोक्तात् परिमाणाद्धीनत्वं नेति ज्ञापनार्थम् । यथाशरीरमिति महाशरीरेषु प्रसादमलाः प्रभूता भवन्ति । लघुदेहेष्वल्पा इति ज्ञापयति ।

तत्राहाररसो व्यानविक्षिप्तो यथास्वं सप्तसु धात्वग्निषु क्रमात् पच्यमानः स्वात्मभावप्रच्युतिसमनन्तरमेव मांसरक्तादिधातुसंज्ञकः कालवदस्खलितबलप्रमाणो देहमूर्जयित्वा धातून् धातुमलांश्च पुष्णाति ॥

तत्रेत्यादिनास्मिन् क्रमधातुपाकवादे कर्म दर्शयति । आहारस्य प्रधानाग्निना पक्वस्य सतः यो रसो भवति स व्यानेन हृदयमूलभवेन वायुना विक्षिप्तः प्रेरितः स्रोतस्सु निक्षिप्तः सन् धात्वग्निषु पच्यमानः विशिष्टनत्कार्यव्यपदेशयोग्यस्वरूपप्रच्युतिकाले मांसरक्तादिधातुसंज्ञः कालवदविच्छिन्नवाही धातून् रक्तादीन् धातुमलांश्च कफादीन् पुष्णाति । रक्तं रसाग्निनैव पाकेन भवति । मांसाग्निनैवमादि यथास्वशब्दार्थः । देहमूर्जयन् शरीरं प्रापयन् ।

अथान्नकिट्टमच्छं मूत्रं घनं शकृत् । रसस्य सारो रक्तं मलः कफो लसीका च । रक्तस्य सारो मांसं कण्डरासिराश्च मलः पित्तम् । मांसस्य सारो मेदस्त्वचो वसा च किट्टं कर्णाक्षिनासिकास्यरोमकूपप्रजननमलाः । मेदसः सारोऽस्थिस्नायुसन्धयः किट्टं स्वेदः । अस्थ्नः सारो मज्जा किट्टं केशरोमनखाः । मज्ज्ञस्तु सारः शुक्रं मलोऽक्षिविट्त्वचां स्नेहः । शुक्रस्य सारमोजः । अत्यन्तशुद्धतयास्य मलाभावः । अन्ये पुनरत एव तस्य नेच्छन्ति पाकम् । अपरे पुनः शुक्रसारं गर्भमेवामनन्ति ॥

अथेत्यादिना प्रसादमलयोर्विभागं दर्शयति । यो यस्य पाकात् प्रसादः स तस्य सारो यो मलः स किट्टः सुबोधम् । अन्नमलस्य घनाच्छभेदेन द्वैविध्यम् । लसीका जलसदृशी । वसा स्वच्छस्नेहः । कर्णादिषट्कस्य मलशब्देन संबन्धः । कर्णादिषु मलो दृश्यत एव प्रजनने मेहनम् । सन्धयोऽस्थिभागाः पूर्वमुक्ताः । अस्थ्यादेः स्नेहो मलः । शुक्रस्य तु क्रमेण सारसारत्वाच्छुद्धतया मलाभावः । अपर आचार्याः अत सारादपि सारतरत्वाद्धेतोः शुक्रस्य पाकं नेच्छन्ति अन्ये त्वाचार्याः शुक्रस्य सारो गर्भ इत्यामनन्तीति ।

आध्यात्मिकानां भावानां संभवोक्तिप्रसङ्गे वाय्वादितयेन प्रकारेण संभव उच्यते ।

वायुः पुनरग्नेराहारस्य च बहुल्पतया तस्मात्तस्मान्मूर्छनाविशेषादमूर्तः श-

स्वानीपच्छन्दः मधुरोऽल्पो वा पश्चात्मा कोष्ठे प्रादुर्भवति । एवं च कृत्स्नात्ममया एव देहे सर्वे भावाः । तेनैव चेदमेवं चिरेण व्याप्तमन्तर्बहिः शारीरयन्त्रमनवरतप्रवाहेण स्वास्थ्यबलोपचययुक्तं यावत्कर्मोपादानं याप्यते । अन्यथा स्वधरसोत्क्षेपणाद्विपद्धस्रोतसा वा यथावदनभिसन्धीयमानधातुप्रवाहमन्तरा व्यवच्छिद्यते । व्याधिभाजनं वा भवति ॥

वायुः कोष्ठे प्राणादिभेदेन पञ्चात्मा प्रादुर्भवति . कुतो हेतोः ? आत्मा मूर्धनाशिरोगात् . कथमाह . अनेकद्वयपा कदाचिदपि समन्तेऽप्याहारस्याल्पतया च . वायुः कुतश्चिन्मूर्धनाशिरोगात्मूर्तोऽपि सच्छन्दत्वात् भवति . कुतोऽग्निपच्छन्दः . कुतोऽपि मधुरः . कुतोऽप्यल्प इति . अमूर्तोऽकठिनः . तस्मात्सर्वे शारीरा भावा कृत्स्नमयाः . तेनैव वायुनाविच्छिन्नप्रवाहेण इदमनन्तरोक्तेन क्रमेण शरीरं विपरिणमति . अभ्यासेऽत्यन्तानि . बहिर्बहिर्भागे . शरीरयन्त्रकं याप्यत इति सम्बन्धः . किम्भूतं शरीरयन्त्रकं याप्यत इत्याह . स्वास्थ्येन बलेनोपचयेन च युक्तम् . एतच्च यावत्कर्मोपादानमाह . तद्धेतुकर्मपरिक्षयात् . अन्यथेत्यादि सुबोधम् . इति क्रमधातुवादः .

अन्ये तु वर्णयन्ति । अभ्यवहृतमात्रस्याहारस्य कण्ठनाडीमनुप्रविष्टस्य महानिम्नप्रवर्तिनस्य यो य एवांशः कायाग्निनावलीढः पाकमुपनीयते तस्य तस्यैव प्रसादाख्यो रसलेशोऽभिनिर्वृत्तिसमनन्तरं समं समस्तधातुषु संवृतासंवृतैः प्रविसृतो विवृतमुखेष्वासन्नेषु स्रोतस्सु भूयान् प्रथमतरं चान्वेति पर्यायेणेतरेष्वपि । एवमन्नरस एव साक्षात्सर्वधातून् केनचिदेव कालभेदेन पुष्णाति । न पुनर्धातवो धात्वन्तरतां स्वरूपोपमर्देन प्रतिपद्यन्त इति ॥

अन्ये पुनराचार्याः अन्नरसादेव सकलधातुप्रभवं वर्णयन्ति , न च धातोर्धात्वन्तरादुत्पत्तिमिच्छन्ति , कथमित्याह . अभ्यवहृतमात्रस्येत्यादि . य एवाहारभागः कोष्ठप्राप्तिसमनन्तरमग्निना संपच्यते तस्यैव तेन पचनस्य योऽग्रसारः स तदैव सर्वधातुस्रोतस्स्वनुगच्छति . केवलं तत्र विशेषः . विवृतमुखेषु असंवृतेषु स्रोतस्सु सारतमप्रदेशासन्नेषु च प्रथममन्वेति भूयांश्चान्वेति . इतरेषु संवृतमुखेषु दूरेषु च विपर्ययेण स्वल्पश्चिरेण चान्वेति . एवमस्मिन् पक्षे केवलमविकृततरस्यान्नसारस्य सकलधातुपरिपाकत्वमुक्तम् . यथोत्तरं तु धातुस्रोतसां संवृतमुखत्वात् दूरदूरतरत्वाच्च कालभेद आश्रित एव . तेन द्वयोरपि पक्षयोरन्यतया न युगपद्धातुसंभवः . एवं च धातोर्धात्वन्तरोत्पादादन्यत्र संवृतत्वदूरत्वाभ्यामिति . सुबोधम् .

अग्निस्तु बलभेदेन चतुर्विधो भवति । समो विषमस्तीक्ष्णो मन्दश्च । तत्र समो यः सम्यगेवोपयुक्तमन्नं सम्यक् पचति । विषमोऽसम्यगप्युपयुक्तं पचति सम्यगपि च न पचति । तीक्ष्णोऽसम्यगप्युपयुक्तमाशु पचति । स एव वर्धमानोऽत्यग्निर्भवति । मन्दस्तु सम्यगप्युपयुक्तमुदरगौरवाध्मानविबन्धाटोपान्त्रकूजनमुखशोषवायुस्तम्भादीन्यामलिङ्गानि दर्शयित्वा चिरात् पचति । बाह्येनापि च ज्वालाङ्गारात्मकेनाग्निना नैकाकारः सर्वदा पाको भवति । किमुतान्तराश्रयेणोष्मात्मना समेनापि । तस्मात्तं प्रयत्नतो रक्षेत् । तत्र प्रवरेण सात्म्येन समं यथास्वमपरेणेतरान् क्रमशः सात्म्यमापाद्य

मवरेण परिपालयेद्दोषोपक्रमणीयोक्तेन च वातादिसाधनेन ग्रहणीरोगविहितैश्चौषधभ्यापाममयोगैरिति । भवन्ति चात्र ॥

अग्निरिति । बलभेदेनेति अग्निमाद्यतैक्ष्ण्यवारणम् । तस्याग्नेर्मन्दस्यापि सनुष्यस्य तद्रुपनुष्टये । सर्वोऽग्निसमो इति च । सर्वोपाकरणमामाशयान्यानुक्रमकारेण । उदरगतस्यादौ त्याच्चिकित्स्यादिग्रहणीतन्त्राणि च । शालेत्यादिना जाठरस्याग्नेः प्रयत्नपरिरक्षणीयत्वं दर्शयति । सर्वेति निर्धारणे । समपम्यक्रमणमित्युपक्रमेण साम्येन सर्वरसाभ्यासेन दोषेदिनगत विषमादीनमीनितरेणाप्रतरेण सात्म्येनामवर्णरमाभ्येन यथादोष सात्म्यमासाद्य सर्वरसेनैव परिपालयेत् । दोषोपक्रमणीयोक्तया वातचिकित्सया विषमम् । पित्तचिकित्सया तीक्ष्णम् । कफचिकित्सया च मन्दं चिकित्सेत् । वातादिग्रहणीरोगोक्तेन विधानेन क्रमेण विषमादीनौषधप्रयोगैश्चामप्रयोगैश्च । भवन्ति चात्रेति पद्यारम्भे रीतिः ।

स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च ।
स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च ॥
आहारश्च विहारश्च यः स्याद्दोषगुणैः समः ।
धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः ॥
अतिप्रवृत्तिः सङ्गो वा सिराणां ग्रन्थयोऽपि वा ।
विमार्गतो वा गमनं स्रोतसां दुष्टिलक्षणम् ॥
बिसानामिव सूक्ष्माणि दूरं विप्रसृतानि च ।
द्वाराणि स्रोतसां देहे रसो यैरुपचीयते ॥

स्रोतांसि स्वस्य धातोर्वर्णेन समानि । रक्तस्रोतांसि रक्तवर्णानि । मांसस्रोतांसि मांसवर्णान्येव । सर्वत्र वाच्यम् । कानिचित् स्थूलानि । कानिचिदणूनि सूक्ष्माणि । प्रतानसदृशानि वल्लीवदनेकप्रतानवत्युक्तानि तेषां च स्रोतसामाहारो विहारश्च प्रदूषकः । किंभूत आह । दोषस्य वातादीनामन्यतमस्य गुणैः समः तथापि यो धात्वादीनामन्यतमस्य समगुणोऽपि धातुभिर्विगुणः । यस्य धातोर्यः प्रत्याहारो विहारश्च दूषयिता स एव तस्य स्रोतसो दूषकः । इत्यर्थः ।

अथास्य सारः रिक्तस्य कालेन मात्रानुकूलपित्तादोषैश्चाह केचिदित्यादिना ।

केचिदाहुरहोरात्रात् षडहादपरे परे ।
मासात् प्रयाति शुक्रत्वमन्नं पाकक्रमादिभिः ॥
वृष्यादीनि प्रभावेण सद्यः शुक्रादि कुर्वते ।
प्रायः करोत्यहोरात्रात् कर्मान्यदपि भेषजम् ॥

मतत्रयमेतत् पाकक्रमादिभिर्धातुपरिणतेः स्वमैदिनेरसंभवं प्रदर्शयति । ननु वैकल्पिकत्वादि वृष्यादीनां शुक्रादिकर्तृत्वं दृष्टं तत् कथमित्याह । वृष्यादीनामादि प्रभावः सर्वातिशायिनी शक्तिः । एकेनादिशब्देन वल्यतर्पणादीनां ग्रहणम् । द्वितीयेन बलपुष्ट्यादीनां ग्रहणम् । एकाहःषडहमासभेदेन मतत्रये स्थिते प्रभावादेव वाग्भटः सर्वशास्त्रसिद्धान्तं दर्शयति प्राय इत्यादिना । न केवलं वृष्यादि यावदन्यदपि भेषजं प्रायः अहोरात्रादेव कर्म करोति । अहोरात्रमतिक्रम्य घृतलेहादीनां यद्यपि मात्राभ्यासेन रोगोपशमात्मककार्यनिर्वृत्तिस्तथापि तेषां दिनानुदिनं कार्यकर्तृत्वं स्थितमेवेति प्रदर्शनार्थं प्रायोग्रहणम् ।

कफः पित्तं मलः खेषु प्रस्वेदो नखरोम च ।
स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मलाः ॥
समः समाने स्थानस्थे विषमोऽग्निर्विमार्गगे ।
पित्ताभिमूर्छिते तीक्ष्णो मन्दोऽस्मिन् कफपीडिते ॥
शान्तेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः ।
रोगी स्याद्विकृते तस्मात्तं प्रयत्नेन पालयेत् ॥

इति सिराविभागो नाम षष्ठोऽध्यायः ॥

पूर्वोक्तमेव संपद्योक्तेनाह . कफ इत्यादि . कफादीनि रसादीनां क्षयेण मर्माणि . रसस्य कफो रक्तस्य पित्तम् . मांसस्य कर्णनासिकादिस्रोतोमलानि . मेदसः प्रस्वेदः . अस्थ्नो नखरोम . मज्ज्ञो नेत्रादिस्नेहः . पूर्ववदेव संसारस्तुनकम् . अविकृतः समानः साम्यावस्थायां कारणम् . विकृतस्तु विषमादीनाम् . सुबोधमन्यत् .

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां षष्ठोऽध्यायः ॥



# अथ सप्तमोऽध्यायः ।

---

पूर्वमेवाध्यायारम्भश्लोको व्याख्यातः .

अथातो मर्मविभागं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

सप्तोत्तरं मर्मशतम् । तत्र चतुश्चत्वारिंशच्छाखासु । षड्विंशतिरन्तराधौ । सप्तत्रिंशदूर्ध्वम् ॥

सर्वस्मिञ्छरीरे सप्तोत्तरं मर्मणां शतम् . तत्र शाखाचतुष्टये प्रत्येकं शाखायामेकादश मर्माणि . आ उदरादा चांसकसन्धेः षड्विंशतिः . ग्रीवादौ सप्तत्रिंशत् . एकस्मिन् सक्थ्नि एकादशानां मर्मणां विभागाः प्रदर्श्यन्ते . एतेन शाखात्रये तथैवानुमन्तव्यम् .

अथैकस्मिन् सक्थ्नि मध्यमाङ्गुलिमभितो मध्ये पादतलस्य तलहृदयं नाम मर्म तत्र विद्धस्य रुजया मरणम् । अङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रं तत्राक्षेपकेन मरणम् । क्षिप्रस्योपरि द्व्यङ्गुल उभयतः कूर्चः । तत्र पादस्य भ्रमणवेपने भवतः । गुल्फसन्धेरधः कूर्चशिरः । तत्र रुजाशोफौ । पादजङ्घयोः सन्धाने गुल्फः । तत्र रुक् स्तब्धसक्थिता षण्ढता वा । पार्ष्णि प्रभृतिद्वादशभिरङ्गुलैर्जङ्घामध्ये इन्द्रबस्तिः । तत्र शोणितक्षयान्मरणम् । जङ्घोर्वोः सन्धाने जानु तत्र खञ्जता ॥

पादतलमध्ये मध्यमाङ्गुल्यभिमुखेन तलहृदयं नाम मर्म तत्र विद्धस्य रुजया मरणम् . क्षिप्रे विद्धस्याक्षेपेण मरणम् . आक्षेपो वातव्याधिषु वक्ष्यमाणलक्षणः . कूर्चः क्षिप्रस्योपरि द्व्यङ्गुले . उभयत इति पादपूरणात् पादतल यावत् . तत्र कूर्चे विद्धस्य पादभ्रमणवेपने भवतः . वेपनं कम्पनम् . गुल्फसन्धेरधः कूर्चशिरो नाम मर्म . तत्र रुजाशोफौ भवतः . तत्रेत्यत्र विद्धस्येत्यनुवर्तते . पादस्य जङ्घायाश्च सन्धाने स्थितो गुल्फः रुगादिकरः . षण्ढता अयोषिद्योग्यत्वम् . जङ्घामध्ये इन्द्रबस्तिः . तत्र रक्तक्षयान्मरणं भवति . जङ्घोर्वोः संगमे स्थितं जानु तत्र खञ्जता भवति . खञ्जो विकृतपादः .

जानुनस्त्र्यङ्गुलादूर्ध्वमुभयत आणिः। तत्र शोफाभिवृद्धिस्तब्धसक्थिता च । ऊरुमध्ये उर्वी तत्र रक्तक्षयात्सक्थिशोषः । उर्व्यास्तूर्ध्वमधो वंक्षणसन्धेरूरुमूले लोहिताक्षम् । तत्र रक्तक्षयात् पक्षाघातः । वंक्षणवृषणमध्ये विटपम् । तत्र पाण्ड्यमल्पशुक्रता वा । सक्थिवद् बाहोः ।

विशेषस्तु गुल्फो मणिबन्धः तथा जानु- कूर्परम् । तयोर्मध्ये कुणिता । विटप- ञ्च कक्षाक्षमध्ये कक्षाधरः तत्र कुणित्वम् ॥

आणिरप्युभयतः ऊर्वोः जानुनस्त्र्यङ्गुलादूर्ध्वं द्वौ स्थितौ व्याप्य भवत इत्यर्थः . वधादिकरः . ऊरुमध्ये स्थिता ऊर्वी . तद्वेधाद्रक्तक्षयात्सक्थिशोषः . ऊरोर्मूले वङ्क्षणसन्धेरधस्ताल्लोहिताख्यम् . तत्र रक्तक्षयात् पक्षाघातो भवति . वङ्क्षणवृषणयोर्मध्ये विटपं नाम . तत्र षण्ढता अथवा अल्पशुक्रता भवति . इति स- ल्लक्षणादिमर्मकूर्चशिरोगुल्फेन्द्रबस्तिमाण्याण्युर्वीलोहिताख्य - विटपाख्येकादशैकस्याः शाखाया मर्माणि . तद्वदेव शा- खान्तरेऽपि विज्ञेयम् . केवलं बाह्वोः केषाञ्चिदपि वि- शेषः . तदेवोच्यते . यथा जङ्घाचरणयोः सन्धौ गु- ल्फः तथा करप्रपाण्योर्मणिबन्धः . यथा जङ्घोर्वोः सङ्- गे जानु तथा प्रपाणिप्रबाहुमध्ये कूर्परः . जानुनि विद्धे यथा खञ्जता कूर्परे विद्धे तथा कुणिता . कु- णित्विकृतकरः . तथा वङ्क्षणवृषणयोर्मध्ये विटपं तथा कक्षाक्षमध्ये कक्षाधरः . तस्मिन्विद्धे कुणित्वम् .

वातवर्चोनिरसनः स्थूलान्त्रप्रतिबद्धो गुदः । तत्र सद्योमरणम् । अल्पमां- सशोणितोऽभ्यन्तरतः कट्यां धनुर्वक्र ए- कद्वारोऽधोमुखो बस्तिः । तत्रापि स- द्योमरणमश्मरीव्रणादृते । तत्राप्युभयतो विद्धे न जीवति । एकतोभिन्ने मूत्रस्रा- वी व्रणो भवति । स तु यत्नेनोपक्रा- न्तो रोहति । पक्वामाशयमध्ये नाभिः त- त्रापि सद्योमरणम् ॥

गुदः स्थूलान्त्रे प्रतिबद्धो वाताद्दिनिरसनकर्मा . तस्मिन्विद्धे सद्योमरणम् . बस्तिरल्पमांसशोणितः कट्यां मध्ये पृष्ठतो वक्रो धनुर्वत् . द्वारो मूत्र स चास्यैकः अधो- मुखश्च . तत्रापि मर्मणि विद्धे सद्य मरणमश्मरीव्रणादृते . तत्रश्मरीव्रणे मध्ये विद्धे मर्मणि मरणम् . अश्मरीनिर्व्यापत्तौ विद्धे मर्मणि मूत्रस्रावी व्रणो भवति . सुरोहम् . न केवलं बस्तिरेव सिद्धः सद्योमरणं कारोत्यपरोऽपि वस्तयोः .

कोष्ठवक्षसोः स्तनयोश्च मध्ये सत्व- रजस्तमोऽधिष्ठानमामाशयद्वारं हृदयं तत्रा- पि सद्योमरणम् । स्तनयोरधस्ताद्‌व्यङ्गु- लमुभयतः स्तनमूले तयोः कफपूर्णकोष्ठ- स्य मरणम् । स्तनचूचुकयोरूर्ध्वं द्व्यङ्गु- लमुभयतः स्तनरोहिते । तयोः शोणि- तपूर्णकोष्ठस्य मरणम् । उभयतोरसोनो- र्ध्वं वातवहे अपस्तम्भौ तयोः शोणि- तपूर्णकोष्ठतया कासश्वासाभ्यां च मरणम् । अंसकूटयोरधः पार्श्वयोरुपरिभागयोरपाला- पौ तयोः पूयत्वमापन्नेन रक्तेन मरणम् ॥

कोष्ठवक्षसोः स्तनयोश्च मध्ये स्थितं सत्त्वरजस्त- मसामधिष्ठानमामाशयद्वारं तु हृदयम् . तत्रापि विद्धस्य सद्योमरणम् . तयोरिति . स्तनमूलयोर्विद्धयोः मूच- कौ स्तनमूलौ स्यातौ . उरसि उभयतो द्वे वातवहे नाड्यावपस्तम्भौ नाम मर्मणी . अंसपार्श्वान्तरयोर्मध्ये किञ्चित् पार्श्वभागे अपालापौ तयोर्मध्ये विद्धयोर्न तयो- मरणम् . अपि तु पूयत्वमापन्ने रक्ते .

पृष्ठवंशमुभयतः प्रतिश्रोणीकर्णावस्थि- नी कटीकतरुणे । तयोः शोणितक्षयात् पाण्डुविवर्णो हीनरूपो म्रियते । पार्श्व- योर्जघनबहिर्भागे पृष्ठवंशमुभयतः कुकुन्द- रौ । तयोः स्पर्शाज्ञानमधःकाये चेष्टाना- शश्च । श्रोणीकर्णयोरुपर्याशयच्छादनौ पा- र्श्वान्तरप्रतिबद्धौ नितम्बौ । तयोरधःका-

ये शोफो दौर्बल्यं मरणं च । अधः पार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ये तिर्यगूर्ध्वं च पार्श्वसन्धी । तयोः शोणितपूर्णकोष्ठतया मरणम् ॥

पृष्ठवंशमुभयतः पृष्ठवंशस्य द्वयोः पार्श्वयोर्ये प्रतिश्रोणिकर्णावस्थिते स्थिते ते कटीकतरुणे मर्मणी । श्रोण्याः कर्णाकृतित्वात् श्रोणीकर्णौ । पृष्ठवंशस्य पार्श्वयोर्मर्मणी कुकुन्दरे । ते च जघनाद्बहिः कट्याः पश्चिमो भागो जघनम् । पृष्ठवंशस्य द्वयोः पार्श्वयोः श्रोणीकर्णयोरुपरि पार्श्वान्तरप्रतिबद्धौ पक्वाशयस्य छादने नितम्बौ मर्मणी । पार्श्वान्तरप्रतिबद्धौ । सव्यपार्श्वस्थः सव्ये प्रतिबद्धः । अपसव्यश्चापसव्ये । तत्र चाध ऊर्ध्वं तिर्यक् च प्रतिबद्धौ पार्श्वसन्धी । ते च जघनपार्श्वयोर्मध्ये भवतः

स्तनमूलयोरार्जवेनोभयतः पृष्ठवंशं बृहत्यौ । तयोः शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्मरणम् । पृष्ठवंशमुभयतो बाहुमूलसंबद्धे अंसफलके । तयोर्बाहुस्वापशोषौ । ग्रीवाबाहुशिरोमध्येऽसपीठस्कन्धबन्धनावंसौ । तयोः स्तब्धबाहुता ॥

पृष्ठवंशस्य द्वयोः पर्श्वयोः स्तनमूलयोरार्जवेन तिर्यक् स्पष्टदिग्भङ्गेन बृहत्यौ मर्मणी । असंफलके पृष्ठवंशस्य द्वयोः पार्श्वयोः बाहुमूले च प्रतिबद्धे तयोर्वध इति सर्वत्र सम्बन्धः । अंसौ ग्रीवादिमध्यगौ स्कन्धयोः अंसपीठयोश्च बन्धकौ । एवं गुदो बस्तिर्नाभिर्हृदयं द्वे स्तनमूले द्वे स्तनरोहिते द्वावपलापौ द्वावपस्तम्भौ द्वे कटीकतरुणे द्वे कुकुन्दरे द्वौ नितम्बौ द्वौ पार्श्वसन्धी द्वे बृहत्यौ द्वे असफलके द्वावंसाविति षड्विंशतिर्मर्माण्यन्तरायौ । ऊर्ध्वमुच्यते ।

कण्ठनालीमुभयतश्चतस्रो धमन्यः । तासां द्वे नीले द्वे मन्ये । तासु मूकता स्वरवैकृत्यं रसाग्राहिता वा भवति । ग्रीवायामुभयतः पृथक् चतस्रः सिरामातृकास्तासु सद्योमरणम् । शिरोग्रीवयोः सन्धाने कृकाटिके । तयोश्चलमूर्धता । कर्णपृष्ठयोरधस्संश्रिते विधुरे । तयोर्बाधिर्यम् । घ्राणमार्गमुभयतः श्रोत्रमार्गप्रतिबद्धावभ्यन्तरतः फणौ । तयोर्गन्धाज्ञानम् । भ्रुवोः पुच्छान्तयोरधोक्ष्णोर्बाह्यतोऽपाङ्गौ तयोरान्ध्यम् । भ्रुवोः पुच्छान्तयोरुपर्यनुकर्णं ललाटे शंखौ । तयोः सद्योमरणम् । भ्रुवोरुपरि निम्नयोरावर्तौ । तयोरान्ध्यम् । दृष्ट्युपघातो वा ॥

कण्ठनाड्यामेकस्मिन् पार्श्वे एका नीला नाम सिरा । एका मन्या । तथैव द्वितीये तासां वधे मूकत्वादिकं भवति । ग्रीवाया द्वयोः पार्श्वयोः अष्टौ सिरा मातृकाख्याः । उभयपार्श्वे शिरसो ग्रीवायाश्च सन्धाने कृकाटिके मर्मणी । तत्र विद्धस्य चलशीर्षता । कर्णयोरधो विधुरे घ्राणश्रोत्रस्रोतसोः पार्श्वयोरन्तःशिरसि गलप्रदेशे फणौ नाम्ना मर्मणी । तौ च श्रोत्रस्रोतःप्रतिबद्धौ । तयोर्वधे गन्धाज्ञानम् । भ्रुवोः सम्बन्धिनोः पुच्छान्तयोर्बाह्यान्तयोरधः अक्ष्णोश्च बहिरपाङ्गौ मर्मणी । ललाटे भ्रुवोः पुच्छान्तयोरुपरि कर्णमनु कर्णं प्रति शंखौ नाम मर्मणी । तयोर्वधे सद्योमरणम् । भ्रुवोरुपरि निम्नयोः प्रदेशयोरावर्तौ नाम्ना द्वे मर्मणी । तयोर्वधे आन्ध्यमदर्शनं, अथवोपघातमात्रं दृशेः ।

शंखयोरुपरि केशान्त उत्क्षेपौ । तयोः सशल्यः पाकात् पतितशल्यो वा जीवेन्नोद्धृतशल्यः । भ्रुवोर्मध्ये स्थपनी । तत्रोत्क्षेपवत् । पञ्च सन्धयः शिरसि ति-

येगूर्ध्वं च सीमन्ता नाम । तेषून्मादभ्रमचित्तनाशैर्मरणम् । जिह्वाघ्राणाक्षिश्रोत्रतर्पणीनां सिराणां तालुनि सन्निपातः । तासां मुखानि चत्वारि शृङ्गाटकसंज्ञानि तेषु सद्योमरणम् । मस्तकाभ्यन्तर उपरिष्टात्सिरासन्धिसन्निपातो रोमावर्तः सोऽधिपतिर्नाम । तत्रापि सद्योमरणं भवतीति ॥

शङ्खयोरुपरि केशान्तसान्तमर्यादे उत्क्षेपौ मर्मणी . तयोर्विद्धः सन् सशल्यो जीवति पाकाद्वा स्वयंपतिते जीवति . उद्धृतशल्यो न जीवेत् . भ्रुवोर्मध्ये स्थपनी नाम मर्म तत्रोत्क्षेपवत् सशल्यो जीवेत् . पाकात् पतितशल्यो वा . तत्र च उद्धृतशल्यः न जीवेत् . पञ्च शिरसि कपालानां सन्धयः पञ्च मर्माणि . तत्र द्वौ ललाटपार्श्वयोः . केशान्तानाश्रितौ द्वौ . कृकाटिकापार्श्वयोरूर्ध्वगौ सन्धी . तयोरुपरि तिर्यग्गतसन्धिः सीमन्तास्तेषु विद्धेषून्मादादिभिर्मरणम् . जिह्वादिसंतर्पणीनां सिराणां तालुनि सन्निपातो भवति . तासां यानि बह्वीनामपि चत्वारि मुखानि तानि शृङ्गाटकाख्यानि मर्माणि . तेषां व्यधे सद्योमरणम् . अन्तर्मस्तक सर्वोर्ध्वसिरासन्धीनां सङ्गमो रोमावर्तो नाम मर्म . स एवाधिपाख्यः . एवं द्वे नीले द्वे मन्ये अष्टौ मातृकाः द्वे कृकाटिके द्वे विधुरे द्वौ फणौ द्वावपाङ्गौ द्वौ शङ्खौ द्वावावर्तौ द्वावुत्क्षेपौ एका स्थपनी पञ्च सीमन्ताश्चत्वारि शृङ्गाटकान्येकोऽधिपतिपर्याय आवर्त इत्येतानि सप्तत्रिंशत् शिरसि मर्माणि . मर्मणां नाम स्थानं च ज्ञातम् , लक्षणं तु न ज्ञातमतस्तद्विज्ञानार्थमुच्यते .

सामान्यलक्षणं पुनर्मर्मणां पीडिते रुजोत्पत्तिर्विषमं च स्पन्दनम् । सामान्येनैव च ॥

देहप्रसुप्तिर्गुरुता संमोहः शीतकामिता ।
स्वेदो मूर्छा वमिः श्वासो मर्मविद्धस्य लक्षणम् ॥

अपि च मरणकारित्वान्मर्म । तत् पुनर्मांससिरास्नाय्वस्थिसन्धिसन्निपातः । तेन तस्मिन् पीड्यमाने विशेषतः प्राणाबाधः । बाहुल्येन तु निर्देशः । तस्मान्मांसाद्याश्रयतो मर्माणि पञ्चधा भिद्यन्ते ॥

सामान्येनेत्यादि . सर्वमर्मणामिदं लक्षणमित्यर्थः . विषममनेकरूपम् . सामान्येनैव चेत्यस्य देहप्रसुप्तिरित्यादिना सम्बन्धः . प्रसुप्तिः छेदाद्यनवबोधः . संमोहो मूर्छा . अपि चेति समुच्चये . मरणकारित्वान्मर्मेति निर्वचनम् . तत् पुनर्मर्म मांसादिसन्निपातस्तेषां मिश्रीभावेनैकत्रावस्थानं तेन हेतुना तस्मिन् पीडितेऽधिकं प्राणानामाबाधो भवति . मांसादीनां पञ्चानां यद्यपि मिश्रीभावेन सर्वं मर्म भवति , तथापि योऽयं मांसमर्मसिरामर्म इत्यादिव्यपदेशः स बाहुल्यकृत एव . यत्र मांसस्य बाहुल्यं तत्र मांसेन व्यपदेशः . यत्र सिराणां तत्र सिराभिरेवमन्यत्रापि वाच्यम् . एवं मांसादिभेदेन पञ्चधा मर्माणि .

तद्यथा । तलहृदयेन्द्रबस्तिगुदस्तनरोहितान्येकादश मांसमर्माणि । उर्वीलोहिताख्यनाभिहृदयस्तनमूलापस्तम्भापालापपार्श्वसन्धिबृहतीनीलामन्यामातृकाफणापाङ्गस्थपनीशृङ्गाटकान्येकचत्वारिंशत् सिरामर्माणि । क्षिप्रकूर्चकूर्चशिरोविटपकक्षाधराणि वस्त्यंसविधुरोत्क्षेपाः सप्तविंशतिः स्नावमर्माणि । कटीकतरुणनितम्बांसफलकशङ्खास्त्वष्टावस्थिमर्माणि । गुल्फमणिबन्धजानुकूर्परकुकुन्दरकृकाटिकावर्तसीमन्ताधिपतयो विंशतिः सन्धिमर्माणि ॥

तत्रैकादश मांसमर्माणि . तद्यथा चतुर्षु करचरणेषु चत्वारि तलहृदयानि . चत्वारीन्द्रबस्तयः . एकं

गुदो द्वे स्तनरोहिते इति । एकचत्वारिंशत् सिरामर्माणि । तद्यथा । चतस्र उर्व्यश्चत्वारि लोहिताक्षाणि एका नाभिरेकं हृदयं द्वे स्तनमूले द्वावपलापौ द्वावपस्तम्भौ द्वौ पार्श्वसन्धी द्वे बृहत्यौ द्वे नीले द्वे मन्ये अष्टौ मातृकाः द्वौ फणौ द्वावपाङ्गावेका स्थपनी चत्वारि शृङ्गाटकानीति । सप्तविंशतिः स्नायुमर्माणि । तद्यथा । करचरणेषु चत्वारि क्षिप्राणि चत्वारः कूर्चाः चत्वारि कूर्चशिरांसि द्वे विटपे द्वौ कक्षाधरौ चत्वार्याणयः । एको बस्तिः । द्वावंसौ द्वे विधुरे द्वावुत्क्षेपाविति । अष्टावस्थिमर्माणि । तद्यथा द्वे कटीकतरुणे द्वौ नितम्बौ द्वावंसफलकौ द्वौ शङ्खाविति । विंशतिः सन्धिमर्माणि तद्यथा । द्वौ गुल्फौ द्वौ मणिबन्धौ द्वे जानुनी । द्वे कूर्परे द्वौ कुकुन्दरौ द्वे कृकाटिके द्वावावर्तौ पञ्च सीमन्ता एकोऽधिपतिरिति ।

पुनश्च पञ्चधा गुदवस्तिनाभिहृदयमातृकाशंखशृङ्गाटकाधिपतय एकोनविंशतिः सद्यःप्राणहराण्याग्नेयत्वात्तेषां सप्तरात्राभ्यन्तरे कालः ॥

तानि च मानादिभेदेन पञ्चधोक्तानि पुनरन्येन प्रकारेण सद्यःप्राणहरत्वादिना पञ्चधाप्याह । कानिचित् सद्यःप्राणहराणि । कानिचित् कालान्तरप्राणहराणि । अन्यानि विशल्यघ्नानि । अन्यानि वैकल्यजननानि । अन्यानि रुजाकराणीति पञ्चप्रकाराः । तत्र सद्यःप्राणहराणि गुदवस्तिनाभिहृदयानि चत्वारि अष्टौ मातृकाः द्वौ शंखौ चत्वारि शृङ्गाटकान्येकोऽधिपतिरित्येकोनविंशतिः । आग्नेयत्वमाशुमरणहेतुः । सप्तरात्राभ्यन्तरे प्रथमदिवसादिति ।

तलहृदयक्षिप्रेन्द्रवस्तिवक्षोमर्मकटीकतरुणनितम्बपार्श्वसन्धिबृहतीसीमन्ताख्यास्त्रिंशत् कालान्तरप्राणहराणि सौम्याग्नेयत्वात्तेषां पक्षाभ्यन्तरं कालः । तेष्वपि तु क्षिप्राणि कदाचिदाशु ॥

त्रयस्त्रिंशन्मर्माणि कालान्तरेण विपन्नं प्राणहराणि । पक्षाभ्यन्तरं वा प्रहारादिवशादनियमः । तद्यथा । चत्वारि तलहृदयानि चत्वारि क्षिप्राणि चत्वार इन्द्रवस्तयः अष्टौ वक्षोमर्माणि स्तनमूलस्तनरोहितापस्तम्भापलापाख्यानि द्वे कटीकतरुणे द्वौ नितम्बौ द्वौ पार्श्वसन्धी द्वे बृहत्यौ पञ्च सीमन्ता इति त्रयस्त्रिंशत् । तेष्वपि मध्ये क्षिप्राणि सद्यःप्राणहराण्यपि भवन्ति ।

उत्क्षेपौ स्थपनी च त्रीणि विशल्यघ्नानि वायव्यत्वात् । शल्यमुखावरुद्धो हि यावदन्तर्वायुस्तिष्ठति तावज्जीवति ॥

यानि विशल्यघ्नानि तानि वायव्यानि । शल्य आकृष्टे वायोर्निर्गमनाज्जीवनाश एव विशल्यमात्रे न तु सशल्यम् । तत्र द्वावुत्क्षेपावेका स्थपनीति त्रीणि ।

कूर्चजानुकूर्पराण्युर्वीलोहिताख्यविटपकक्षाधरकुकुन्दरांसफलकनीलामन्याकृकाटिकाविधुरफणापाङ्गावर्ताश्चतुश्चत्वारिंशद्वैकल्यकराणि सौम्यत्वात् । सोमो हि स्थैर्यशैत्याभ्यां प्राणान् धारयति । तान्यपि च कदाचिदभिहतानि मारयन्ति ॥

चतुश्चत्वारिंशद्वैकल्यं कुर्वन्ति सौम्यत्वान्न मारयन्ति । तत्र चत्वारि कूर्चानि द्वे जानुनी द्वौ कूर्परौ चतस्र आणयश्चतस्र उर्व्यः चत्वारि लोहिताक्षाणि द्वौ विटपौ द्वौ कक्षाधरौ द्वौ कुकुन्दरौ द्वावंसफलकौ द्वे नीले द्वे मन्ये द्वे कृकाटिके द्वे विधुरे द्वौ फणौ द्वावपाङ्गौ द्वावावर्ताविति । एतानि चतुश्चत्वारिंशत् कदाचिन्मारयन्त्यप्यतिघातात् ।

कूर्चशिरोगुल्फमणिबन्धास्त्वष्टौ रुजाकराण्यग्निवायुसोमगुणबाहुल्यात् । अग्नि-

वायु हि विशेषेण रुजाकरो । सोमस्तु प्राणानवलम्बत इत्युक्तम् ।

अष्टौ मर्माणि रुजाकराणि सोमाग्निवाय्वात्मकत्वात् . चत्वारि कूर्चशिरांसि द्वौ गुल्फौ द्वौ मणिबन्धावित्यष्टौ .

अन्ये त्वाहुः । मांसादीनां पञ्चानामपि विवृद्धानां समवायात् सद्यः प्राणहराणि । एकैकहीनानामल्पानां च क्रमादितराणि स्वभावत एव च ॥

अन्ये त्वाचार्या आग्नेयत्वं हेतुं परित्यज्य सद्यःप्राणहरत्वे पूर्वोक्तमांसादिपञ्चकस्यान्यूनाधिकभावेन विवृद्धस्य हेतुत्वं वदन्ति . यथा गुदादीनामेकोनविंशतेर्मांसादीनां समानाधिकानां सन्निपातस्तथा सद्यःप्राणहरत्वमित्यर्थः . आदिशब्देनास्थिस्नायुसिराधमनीनां ग्रहणम् . इतराणि कालान्तरप्राणहरादीनि चत्वार्येकैकेन हीनानां मांसादीनां स्वल्पानां च सन्निपाताद्भवन्तीति . तेन मांसादीनामन्यतमेनैकेन हीनानां कालान्तरप्राणहराणि . द्विहीनानां विशल्यघ्नानि . त्रिहीनानां वैकल्यजननानि . चतुर्थेन सद्भावात् रुजाकराणि . सुश्रुतः पठति द्वयोः समानादीनि . तत्र शृणुमहे .

अन्ये वदन्ति । प्रतिनियतकर्माणि चन्द्रसूर्यायस्कान्तोपलानामिवाम्बुवह्निकाललोहसंश्लेषाः तथा च छिन्नेषु बहुमर्मस्वपि पाणिपादेषु स्वभावत एव न मृत्युः ॥

अन्ये त्वाचार्या न सौम्याग्नेयत्वादिकं हेतुं वदन्ति . नापि विशिष्टस्य मांसादेः सन्निपातम् . अपि तु स्वभावमेव हेतुत्वेनोद्दिशन्ति . यथा चन्द्रकान्तादीनामम्बुसृजत्वादि . तथा बहुमर्माश्रये पाणिपादे छिन्नेऽपि मृत्युर्न भवतीत्यत्रापि स्वभाव एव हेतुः .

अपरे पुनरत्रापि हेतुमाहुः । पाणिपादच्छेदे हि सिराः संकोचमायान्ति । ततोऽल्पासृक्प्रवृत्तेर्जीवितम् । मर्मवधे त्वतिरक्तस्रुतितो वायुवैकृतेन च मरणम् । तस्मान्मर्माभिहतस्य तदङ्गमाशु सन्धिदेशाच्छेदनीयम् । अतिहतानां तु मर्मणां यथास्वं पूर्वं पूर्वं च कर्म ईषदन्ते वा हतानामुत्तरोत्तरमेव ॥

अपर इत्यादि सुबोधम् . तस्मान्मर्मण्यभिहते तदङ्गं यस्मिन् मर्माश्रितं तत् सन्धिदेशाच्छेदनीयम् . सन्धौ छिन्ने संकुचिताः सिरा रक्तं न मुञ्चन्त्यतो जीवितं न त्यजेत् . तेषां च मर्मणां सद्यःप्राणहरणादिकं पञ्चविधं कर्मोक्तम् . तथातिहतानां मर्मणामात्मीयं कर्म पूर्वं पूर्वं च भवति . एतदुक्तं भवति . गुदादीनामभिहतानां स्वकीयं सद्यःप्राणहरणमेव तथा च पूर्वासंभवः . तलहृदयादीनामभिहतानां स्वं कर्म कालान्तरप्राणहरत्वं . कदाचित्तु पूर्वमपि सद्यःप्राणहरत्वं भवति . उत्क्षेपादीनां स्वं कर्म विशल्यघ्नत्वं न तु पूर्वं संभवति . अथवा कालान्तरप्राणहरणमपि . कूर्चादीनामभिहतानां स्वं कर्म वैकल्यकरणम् . कदाचित्तु पूर्वमपि भवति कालान्तरप्राणहरणम् . विशल्यघ्नत्वं पूर्वमपि न संभवत्यसंभवात् . कूर्चशिरःप्रभृतीनां चाभिहतानां स्वं कर्म रुजाकरणम् . कदाचित्तु पूर्वमपि भवति वैकल्यकरणमित्युक्तमभिहतानां यथास्वं पूर्वं पूर्वं च कर्म . यदा तु तानि मर्माण्युपरिष्टात् स्तोकेनाभिघातेनाभिहतानि भवन्त्यन्ते वा पर्यन्ते वाभिहतानि भवन्ति . तदा तेषामुत्तरमेव . तेन सद्यःप्राणहराणामपि पर्यन्ते वाभिहतानामुत्तरं कर्म कालान्तरप्राणहरणम् . कालान्तरप्राणहराणामपि पर्यन्ते वाभिहतानामनन्तरमुत्तरं कर्म वैकल्यकरणम् . विशल्यघ्नत्वं न संभवत्यनन्तरमपि . विशल्यघ्नानामपि पर्यन्ताभिहतानामुत्तरं वैकल्यकरणं कर्म भवति . वैकल्यकराणामपि पर्यन्ते चाभिहतानामुत्तरं कर्म रुजाकरणमित्युक्तं यथोत्तरमेवेति .

पुनश्च पञ्चधा भिद्यते । तद्यथा । उर्वीः कूर्चशिरांसि विटपे कक्षाधरे च द्वादश स्वांगुलोन्मितानि । गुल्फौ मणिबन्धौ स्तनमूले च षट् अंगुलानि । जानुनी कूर्परे च चत्वारि त्र्यङ्गुलानि । कूर्चौ गुदो बस्तिर्नाभिहृदयं नीले मन्ये मातृकाः सीमन्ताः शृङ्गाटकानि चैकोनत्रिंशत् पाणितलसंमितानि । शेषाणि षट् पञ्चाशदर्धाङ्गुलप्रमाणानि । अन्ये पुनराहुः । व्रीहिप्रमाणानि क्षिप्राणि । फलायप्रमाणाः स्तनरोहितोत्क्षेपाः । तथान्ये तिलप्रमाणान्यपि मर्माणीच्छन्ति । भवन्ति चात्र ॥

तान्येव मर्माण्येवं मानभेदेन पञ्चविधानि । उर्व्यादीनि द्वादश मर्मस्वतः स्वांगुलमानानि चत्वारि चत्वारि द्वे द्वे इति द्वादश । गुल्फादीनि षडङ्गुलानि द्वे द्वे द्वे इति षट् । जानुद्वयं कूर्परद्वयं चेति चत्वारि त्र्यङ्गुलानि । कूर्चादीन्येकोनत्रिंशत् स्वहस्ततलप्रमाणानि । शेषाणि षट्पञ्चाशदर्धाङ्गुलप्रमाणानि । अर्धाङ्गुलमर्धाङ्गुल तथा च धन्वन्तरिः पठति । शेषाणि स्वांगुलमितान्येव मानि देहे इति । स्वर्थागम्य शेषम् । भवन्ति चात्रेति श्लोका उच्यन्ते ।

मर्मव्याप्तेऽपि देहेऽस्मिन्नायुर्मर्माणि रक्षति ।
आयुष्याण्येव सेवेत सदा तस्माद्विचक्षणः ॥
मर्माभिघातः स्वल्पोऽपि प्रायशो बाधतेतराम् ।
रोगा मर्माश्रयास्तद्वत् प्रक्रान्ता यत्नतोऽपि च ॥

अस्मिन् देहे मर्मभिः स्पर्शमात्रप्राणहरैर्व्याप्तेऽपि नास्ति मर्माण्यभिघातादिभ्य आयु रक्षत्प्राणायुषी हि मर्माश्रये नीयते । तस्मात्तेषां रक्षार्थान्येव वस्तूनि सेवेत विचक्षणः । तदेव विद्धमर्माबाधिको दर्शयति । स्व-ल्पो मर्माभिघातः स्वल्पोऽपि बाधतेतराम् । तथा ये मर्माश्रिता रोगास्ते प्रयत्नेन प्रक्रान्ताश्चिकित्सितुमारब्धास्तद्वत् स्वल्पा अपि बाधन्तेतरामित्यर्थः । तस्मात्प्रयत्नेन पालयेदिति तात्पर्यार्थः ।

विक्षिप्यते भृशं सीदन् शून्यो भ्रमति वेपते ।
ऊर्ध्वं श्वसिति कृच्छ्रेण स्रस्तगात्रो मुहुर्मुहुः ॥
हृदयं दह्यते चास्य नैकस्थानेऽवतिष्ठते ।
मर्मोपघातान्मरणमेतैर्लिङ्गैः समश्नुते ॥
अमर्मविद्धोऽपि नरश्छेदभेदादिपीडितः ।
अतिनिस्स्रुतरक्तश्च सद्यस्त्यजति जीवितम् ॥
अतोऽन्यथा जीवति तु विद्धः शरशतैरपि ।

मर्मणि प्रहतस्य मुमूर्षोर्मरणलक्षणानि विक्षिप्यते भृशं सीदन्नित्यादिनोच्यन्ते । मरणमश्नुते प्राप्नोतीति सम्बन्धः । न केवलं तु मर्मविद्ध एव जीवितं त्यजति यावदमर्मविद्धोऽपि रक्तस्रावातिस्रुतेः सद्य एव जीवितं जहाति । अतोऽन्यथा यथोक्तमार्गान्यैः मर्मव्यधे रक्तातिप्रवृत्त्या च शरशतैरपि विद्धो जीवति ।

पुण्यवान्नियतायुश्च न कथञ्चिन्न जीवति ।
तस्मादा चरमोच्छ्वासाच्चिकित्सेदेव यत्नतः ॥
तद्बन्धुमित्रानुमतः प्रत्याख्यायातुरं भिषक् ।

इति मर्मविभागो नाम सप्तमोऽध्यायः ॥

तथा यश्च पुण्यवान् सत्कर्मा यश्च नियतायुः स न कश्चिच्च जीवति सर्वथा जीवत्यन्यैः । नियतायुष्ट्वस्य कल्पना दैवेन कर्मणा च आयुर्नियतकाल कृतम् । तस्माद्यावदक्षीणायुर्लक्ष्यते मर्मविद्धमातुरं प्रत्याख्याय आचरमोच्छ्वासाच्चिकित्सेत् । तस्यातुरस्य बन्ध्वादीनामनुमतः सन् एतावता चिकित्साभङ्गापयशो न लभत इति ।

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां सप्तमोऽध्यायः ॥

# अथाष्टमोऽध्यायः ।

शारीरविचारप्रसङ्गेन गर्भस्य मासानुमासिकोऽभिहितः क्रमः सम्प्रति दोषादिभेदेन प्रकृतिप्रदर्शनार्थमध्यायारम्भः .

**अथातः प्रकृतिभेदीयं शारीरं व्याख्यास्याम इति ह स्माहुरात्रेयादयो महर्षयः ॥**

सर्वप्रकृतिभ्यो दोषप्रकृतीनां प्राधान्यात् ता एव तावदुच्यन्ते .

**सप्त प्रकृतयो दोषैः पृथक् संसर्गेण समस्तैश्च भवन्ति । तत्र शुक्रार्तवगर्भाशयकालेषु मातुश्चाहारविहारयोरेकोऽनेको वा यो दोषो भवत्याधिक्येन तेनारम्भणाद्विषयल्यामिवोत्पद्यमानस्य क्रिमेः विषेण सविषक्रिमेरिव वृश्चिकादेराशीविषस्येव वा स्वविषेण प्रकृतिर्जायते ॥**

सप्त प्रकृतय इत्यादि . वातादिभिः पृथक् त्रिभिः संसर्गेण त्रिभिः संनिपातेनैका . ननु च कथं वातादयः प्रकृतीनां कारणतां यान्तीत्याह तेनेत्यादि . शुक्रादिष्वतिरिक्तो य एव दोषो भवति पृथक् मिलितो वा तेनैव पुरुषस्य प्रकृतिः स्यात् .. गर्भाशयकाले गर्भस्याशयान्तरस्थानम् . कथं पुरुषस्य प्रकृतिर्जायत इत्याह . यथा विषजन्तोरुत्पन्नमात्रस्य क्रिमेर्विषेण प्रकृतिर्जायते . यथा वा सविषस्य कृमेर्वृश्चिकादेर्यथा वा आशीविषस्य सर्पस्य विषेणात्मघातकेनापि विषेण वृश्चिकादीनां प्रकृतिभूतत्वेन दोषैरपि पुरुषस्य एतदेवाह .

**तस्मात्तन्मयतया शुक्रार्तवयोर्देहस्य भावित्वात् प्राकृतत्वाच्च तावता तेन दोषेण न विहन्यते । तद्गुणैरेव चास्य शरीरमुपस्क्रियते । ततश्च तद्गुणप्रतिपक्षैः सहसा न बाध्यते । तस्यां त्ववस्थायां विकृतिमति दोषे उल्बणेनैव गर्भः संभवति । संभव एव वा विपद्यते । विकृतो वा भवति ॥**

तस्मादित्यादि . तन्मयतया गर्भस्यादिदोषमयतया प्रकृतिदोषात्मकत्वेन शुक्रार्तवयोर्देहस्यारम्भकत्वात् तथा च देहस्य प्रकृतिकृतत्वात् ... शुक्रशोणितस्य देहारम्भे प्रवृत्तिर्या परिणतिः सा न विहन्यते . तस्मात् शोणितमात्र चाहारम्भे तत्तत्तद्गुणबीजभूतैरेव गुणैः शरीरमुपस्क्रियते . न चास्य प्राकृतदोषविपरीतगुणैराहारविहारैः शरीरं बाध्यते . यदा पुनस्तस्यामवस्थायां शुक्रशोणितसंपातकाले विकृतिमद्दोष उद्धतो भवति तदा गर्भो न संभवत्येव . संभवकाल एव वा व्यापद्यते विनश्यति . अथवा विकृतो भवति .

**तथा च केचिदाहुः । द्विविधा वातादयः प्राकृता वैकृताश्च । तत्र प्राकृताः सप्तविधायाः प्रकृतेर्हेतुभूताः शरीरकजन्मानः । ते शरीरधारणाद्धातुसंज्ञाः । दोषाख्यानां विकृतानां बीजभूताः । मुमूर्षोः स्वरूपाच्चलन्ति । सर्वेष्वपि च देहे संनिहितेषु प्रकृतानुल्बणेन व्यपदेशः ॥**

तथा चेत्यादिना उक्तमेव पक्षं द्रढयति . मुनीषम् . प्राकृताः शरीरकजन्मानः शरीरधारणेन धातुसंज्ञा लभन्ते . ते प्राकृता दोषसंज्ञकानां वैकृतानां वातादीनां बीजभूता . ते च प्राकृता यां न मुमूर्षोस्य स्वरूपाच्च चलन्ति . यावज्जीवितमेतत्स्वरूपभ-

णा इत्यर्थः । ये तु जन्मन उत्तरकालं संभवन्ति ते वैकृताः । यद्यपि च प्रकृत्यवस्थाया सर्वे वातादयः मलिना भवन्ति तथापि य एव तेषामधिकस्तेनैव प्रकृतेर्व्यपदेशः ।

वैकृतास्तु गर्भादभिनिःसृतस्याहाररसस्य मलाः संभवन्ति । प्राकृतेष्ववरोहन्ति । ते कालादिविशेषेण स्वप्रमाणवृद्धिक्षययोगाद्देहमनुगृह्णन्ति दूषयन्ति च । तद्वदोजोऽपि परं हृदयस्थमष्टबिन्दुप्रमाणमाधारः प्रासृतिकस्य रसात्मकस्यौजसः क्षयवृद्धिभाजः ॥

ये च वैकृतास्ते यद्यपि गर्भादभिनिःसृतस्याहारमलाः कफभूरं कफमित्यादिनोक्ताः संभवन्ति तथापि ते संभूतास्तत्रैव प्राकृतेष्वेव वातादिष्ववरोहन्ति सजातीयत्वादेकीभवन्तीत्यर्थः । ते च वैकृताः प्राकृतैरेकीभूताः कालादिविशेषापेक्षया केनचित्स्वप्रमाणेन स्थिता देहमनुगृह्णन्ति । तथा वृद्धिक्षययोगात्तु देहं दूषयन्ति । ओजोऽपि तद्वदेव वातादिवत् स्वप्रमाणेन स्थितं देहमनुगृह्णाति वृद्धिक्षयाभ्यां युक्तं देहं दूषयति च । परं चौजः परं मानेनाष्टबिन्दुप्रमाणं प्रासृतिकस्य महत ओजस आधारस्तदायत्तयोगक्षेमत्वान्महतः ।

अथ प्रकृतीनां विशेषेण लक्षणमुच्यते ।

अथ स्वदोषगुणानुरोधाद्वातप्रकृतिस्तनुरूक्षस्तब्धाल्पाङ्गदन्तनखरोमनेत्रस्वरः शीघ्रवृद्धपिण्डिकः सशब्दसन्धिगामी शीघ्रारम्भक्षोभग्रहणविस्मरणश्चलधृतिमतिगतिदृष्टिश्चापसौहार्दस्तेनोऽनार्यो मत्सर्यजितेन्द्रियः प्रियगान्धर्वनर्तितहासहासविलासकलहमृगयोद्यानपानः स्निग्धोष्णमधुराम्ललवणान्नपानकाङ्क्षोपशयश्च भवति ॥

अपि च ।

अल्पवित्तबलजीवितनिद्रः
क्षामवाग्धमनिसंततगात्रः ।
दुर्भगोऽतिबहुभुग्बहुभाषी
नास्तिकः स्फुटितकेशकराङ्घ्रिः ॥

किञ्चिदुन्मिषितदुर्मुखसुप्त-
स्स्वपिति क्रथति खादति दन्तान् ।
शुष्करूक्षविषमासु सरित्सु
व्योम्नि शैलशिखरेषु च याति ॥

अथेति । तत्र वातप्रकृतिः पुरुषः स्वस्य दोषस्य वातस्य गुणानुरोधात् कार्यस्य च कारणानुरोधात् तनुरूक्षत्वादिगुणयुक्तो भवति । तन्वादिरूपाणि नाङ्गादीनि यस्य स तथोक्तः । उद्वद्धे ह्रस्वकठिने पिण्डिके यस्य । जङ्घायाः पश्चिमे भागे पिण्डाकृति मांसं पिण्डिका । सशब्दैः सन्धिभिर्गच्छतीति सशब्दसन्धिगामी । गच्छतो जान्वादिसन्धिभिः शब्दो भवतीत्यर्थः । शीघ्र आरम्भादिर्यस्य स तथोक्तः । चला अनेकरूपा धृत्यादयो यस्य स तथोक्तः । मत्सरी गुणः अभ्यसूयति मत्सरी । तथा अजितेन्द्रियः । तथा प्रियाणीष्टानि गान्धर्वादीनि यस्य स तथोक्तः । गान्धर्वं गेयमिति निदानः पूर्वकृतम् । विलासो लीला । मृगया मृगव्यक्रीडा । यात्रा पुरान्तरगमनम् । स्निग्धादिगुणयुक्तान्नपानाकाङ्क्षते । तदेव सात्म्यत्वेन सुखाय कल्पते । अपि भावे समुच्चये । अल्पानि वित्तादीनि यस्य स तथोक्तः । वित्तं धनम् । जीवितमायुः । धमनीभिः शिराभिः सततं व्याप्तं गात्रं यस्य । दुष्टो भगो यस्य ।

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
वैराग्यस्याथ मोक्षस्य षण्णां भग इति स्मृतिः ॥

बहु भाषते यः स बहुभाषी । नास्तिकः परलोकं नास्तीति मन्यते । तथा स्फुटिताः केशादयो यस्य । मनाक् च किञ्चिदुन्मिषितनेत्रः उन्मीलितमुखश्च भवति । अपमृष्टः शय्यादयन्तो भवति । क्वथते सम-

नासादिशब्दः . स्वप्ने च शुष्कादिषु मरुति या- ति . ज्योतिरि च [illegible] च . इति वातप्रकृतिलक्षणानि .

पित्तप्रकृतिरुष्णगौरगात्रस्ताम्रनखनयनजिह्वौष्ठपाणिपादतलः शिथिलसन्धिबन्धमांसः करभकपिलविरलमृदुकेशरोमा मध्यबलायुरल्पशुक्रव्यवायापत्यः शूरोऽभिमानी शीघ्रवलीखलतिपलितपिप्लुव्यङ्गक्षुत्पिपासो मेधावी दुर्भगः स्वादुतिक्तकषायशीताभिलाषोपशयश्च भवति ॥

अपि च ।

दयितमाल्यविलेपनमण्डनः
सुचरितः शुचिराश्रितवत्सलः ॥
विभवसाहसबुद्धिबलान्वितो ।
भवति भीषु गतिर्द्विषतामपि ॥

घर्मद्वेषी स्वेदनः पूतिगन्धि-
र्भूर्युच्चारक्रोधपानाशनेर्ष्यः ।
सुप्तः पश्येत् कर्णिकारान् पलाशान्
दिग्दाहोल्काविद्युदर्कानलांश्च ।

पित्तप्रकृतिलक्षणान्युच्यन्ते उष्णेत्यादि . उष्णा- नि गौराणि च गात्राणि यस्य . ताम्राणि ताम्रवर्णानि न- खादीनि यस्य . शिथिलाश्च सन्धिबन्धमांसा यस्य . तथा करभकपिलानि विरलानि मृदूनि च केशरोमाणि यस्य . मध्यबलो मध्यायुरल्पशुक्रोऽल्पव्यवायोऽल्पापत्यश्च . तथा शूरोऽभिमानी च . तथा शीघ्राणि शीघ्रोत्पन्नानि वल्या- दीनि यस्य . वल्यश्चर्मसङ्कोचाः . खलतिः शीर्णके- शत्वम् . पलितं केशशौक्ल्यम् . पिप्लुस्तिलकः कृष्णो मांसाङ्कुरः . मेधा प्रज्ञा विद्यते यस्य स मेधावी . स्वादादिकमाकाङ्क्षति . सदैव चारयोरुभयोरपि . अपि से- [illegible] , दयितानि प्रियाणि माल्यादीनि यस्य .

विभवादिभिश्चान्वितश्च भवति . वयसामपि भीरु गति- मता . तथा प्रभूतकाष्ठादिपूर्णः . स्वप्ने च कर्णि- कारादीन् पश्यति पलाशादींश्च लोहितपुष्पान् . दिग्दाहो दिशां लोहित्येन दाह इति पित्तप्रकृतिलक्षणानि .

कफप्रकृतिस्तु दूर्वेन्दीवरशरकाण्डान्यतमवर्णः समसुविभक्तस्निग्धस्थिरसुकुमारश्लिष्टमांससन्धिबन्धः परिपूर्णचारुगात्रो महाललाटोरुबाहुर्व्यक्तसितासितप्रसन्नायतविशालपक्ष्मलाक्षः स्निग्धमृदङ्गघनघोषः क्षुत्पिपासोष्णसहिष्णुर्बह्वोजोबलशुक्रव्यवायापत्यस्थिरगोपमाल्यानुलेपनो दृढमन्दकर्मकरः पेशलः सत्यवादी स्मृतिमान् धृतिमानलोलुपो बाल्येऽप्यरोदनः कट्वतिक्तकषायोष्णरूक्षेच्छोपशयश्च भवति ॥

अपि च ।

अल्पव्याहारक्रोधपानाशनेहः
प्राज्यायुर्वित्तो दीर्घदर्शी वदान्यः ।
श्राद्धो गम्भीरः स्थूललक्षः क्षमावा-
नार्यो निद्रालुर्दीर्घसूत्रः कृतज्ञः ॥

ऋजुर्विपश्चित्सुभगः सलज्जो
भक्तो गुरूणां दृढसौहृदश्च ।
स्वप्ने सपद्मान् सविहङ्गमालां-
स्तोयाशयान् पश्यति तोयदांश्च ॥

कफप्रकृतिलक्षणान्युच्यन्ते . दूर्वाद्यन्यतमसमानवर्णः . इन्दीवरं नीलोत्पलम् . तथा समानि सुविभक्तानि स्निग्धानि स्थिराणि सुकुमाराणि श्लिष्टानि च मांससन्धि- बन्धानि यस्य . तथा परिपूर्णं चारु च गात्रं यस्य . महान्त्युद्धि महल्ललाटोरुबाहुश्च . व्यक्तसितासिते प्रसन्ने आयते विशाले पक्ष्मले अक्षिणी यस्य , स्निग्ध-

